

# आचार्यलहरी

सव्याख्या

( ಕನ್ನಡ ಅನುವಾದ ಸಹಿತ )

॥ श्रीगुरुराजो विजयते ॥

॥हरिः ॐ ॥

परमपूज्य पण्डितराज जालीहाळाचार्यदौहित्रेण

पूज्य श्रीबाळगारु श्रीनिवासाचार्यपुत्रेण

बाळगारु रुचिराचार्येण

विरचिता

# आचार्यलहरी

रमारोमाऽऽरामप्रमदरसधामोरुमहिमा
हिमाद्रीशब्रह्माद्यमरनुतनामाऽऽगमगमः ॥
क्षमाक्ष्माऽरिक्षामोऽगणितगुणलक्ष्मा गतसमो
मम श्यामो रामो भवतु कृतकामोऽहितशामः ॥ १ ॥

॥ ಶ್ರೀ ಗುರುರಾಜೋ ವಿಜಯತೇ ॥

ಶ್ರೀ ರಮಾದೇವಿಯ ರೋಮಗಳೆಂಬ ನಂದನವನಕ್ಕೆ ಆನಂದ ನೀಯುವ ರಸಗಳ ಮಂದಿರ ಶ್ರೀರಾಮ. ಅಪಾರ ಮಹಿಮ. ಹಿಮಗಿರೀಶ ಹಾಗು ಚತುರ್ಮುಖ ಬ್ರಹ್ಮಾದಿ ಸುರರೆಲ್ಲ ಪೊಗಳುವರು ಅವನ ದಿವ್ಯನಾಮ. ಅವನ ಪರಿಚಯ ನೀಡುವುದು ಕೇವಲ ಸದಾಗಮ. ಕ್ಷಮಿಸುವ ವಿಷಯದಲ್ಲಿ ಭೂಮಿಗೆ ಸಮ. ಎಣಿಸಲಾಗದ ಗುಣ ಲಕ್ಷಣಗಳುಳ್ಳ ಅವನು ಸರ್ವೋತ್ತಮ. ಈ ಶ್ರೀರಾಮದೇವರು ಎನ್ನ ಆಸೆಗಳ ಈಡೇರಿಸುವನಾಗಲಿ. ತೊಂದರೆಗಳನ್ನು ನಿವಾರಿಸಲಿ.

श्रीगुरुराजो विजयते

प्रणम्याचार्यवरदं हयग्रीवं गुरूंस्तथा ॥
आचार्यलहरीव्याख्यां कुर्वेऽद्यतनबोधतः ॥

रमा-लक्ष्मीः । तस्या रोमाणि-तनूरुहाणि । तान्येव आरामः-उद्यानवनम् । तस्य प्रमदः आनन्दः यस्मात् । स चासौ रसानां-शृङ्गारादीनां वारिणां च धाम- आश्रयः वारिद

सदृश इति यावत् ।। उरुः-उत्कृष्टः महिमा यस्य सः ।। हिमाद्रीशः स च ब्रह्मा च, तावादी येषां-तैरमरैः नुतं -स्तुतं, नाम यस्य सः ।। आगमः-सदागमः । तैः गमः-गमनं ज्ञानं यस्य सः ।। क्षमया क्ष्मा-भूमिसदृशः, अथवा क्षमायाः क्ष्मा - भूमिरेव ।। अरीणां क्षामः यस्मात्तादृशः । अगणितगुणा एव लक्ष्म-लक्षणं यस्य सः ।। गतः-निर्गतः समः-समानः यस्य सः ।। अहितानां -दुरितादीनां शमः -शमनं यस्मात्तादृशः ।। १ ।।

**हरिप्रेम्णा पूर्णा कनकवनवर्णैणनयना।**
**सदा विष्णोर्नानागुणगणनतृष्णाऽभिधगुणा ।।**
**धनादीनां दानात्सुजनवदनाब्जेनतुलना**
**तनोत्वेनं दीनं करुणसदनं पद्मसदना ।। २ ।।**

ಶ್ರೀಹರಿಯ ಪ್ರೇಮ ಅವಳಲ್ಲಿ ಪರಿಪೂರ್ಣ. ಅವಳದು ಕರಗಿದ ಬಂಗಾರದಂಥ ಚಲುವ ಬಣ್ಣ, ಜಿಂಕೆಯ ಕಣ್ಣಿನಂತಿದೆ ಅವಳ ನಯನ. ನಿತ್ಯ ಶ್ರೀಹರಿಯ ನಾನಾ ಗುಣಗಳ ಎಣಿಸುವ ಹಪಹಪಿಯೇ ಅವಳ ಹಿರಿ ಗುಣ. ಧನ-ಕನಕಾದಿಗಳನ್ನು ನೀಡುವ ಅವಳು ಸುಜನರ ವದನಾರವಿಂದ ಅರಳಿಸುವಲ್ಲಿ ಸೂರ್ಯಸಮಾನ. ಆ ತಾಯಿ ರಮಾದೇವಿಗೆ ಕಮಲವೇ ನೆಲೆ. ಅವಳ ಕರುಣೆ ಹರಿಯುವಂತಾಗಲಿ, ದೀನನಾಗಿ ಬಂದಿರುವ ಈ ಎನ್ನ ಮೇಲೆ.

कनकवनम्- सुवर्णरसः । तस्य वर्ण इव वर्णः यस्याः सा ।। एणनयना -मृगनयना ।। सुजनवदनाब्जानां इनतुलना ।। इनस्य-सूर्यस्य तुलनं सादृश्यं यस्यां सा ।।

**भिदाबोधाद्बौधाम्बुधि हृदि मुदूर्मिप्रदविधुं**
**मदोद्यद्दुर्वादद्विरदवधबद्धोग्रनिनदम् ।।**
**नदीपादानन्दास्पदपदनिदानं दिविषदां**
**मुदं वन्दे मन्देतरहरिविदेऽमन्दसुहृदम् ।। ३ ।।**

ಭೇದದ ಅರಿವಿನಿಂದ ಬಲ್ಲ ಜನಗಳ ಮಂಡಲವೆಂಬ ಕಡಲ ನಡುವೆ ಆನಂದದ ಅಲೆಗಳನ್ನು ಉಕ್ಕೇರಿಸುವಾಗ ಶ್ರೀಪೂರ್ಣಬೋಧರು ಪೂರ್ಣ ಚಂದಿರ. ಸೊಕ್ಕಿ ಹಾರಾಡುವ ದುರ್ವಾದಿಗಳೆಂಬ ಸಲಗಗಳ ಸೀಳುವುದರಲ್ಲೇ ಅವರ ಕಂಠ ತತ್ಪರ. ಅದರ

ನಾದ ಬಲು ಘೋರ. ಗಂಗೋದಕಪಾದನಾದ ಭಗವಂತನ ಆನಂದಕ್ಕೆ ಅವರ ಮಾತೇ ಆಧಾರ. ಅವರಾದರೋ ಸುರರಿಗೆಲ್ಲ ಆನಂದದ ತರ. ಇಂಥಾ ಅಮಂದಬೋಧರಿಗೆ ನಾ ವಂದಿಸುವೆ. ಶ್ರೀಹರಿಯ ಬಗ್ಗೆ ಪೂರ್ಣತೆಯ ಅರಿವನ್ನು ಮೂಡಿಸಲು ಅವರಲ್ಲೇ ಬೇಡುವೆ.

भिदाबोधः-भेदज्ञानम् । ''विद्याऽऽत्मनि भिदाबोधः' इत्युक्तेः । तस्मात् ॥ बुधानामयं बौधः । स चासावम्बुधिश्च । तस्य हृत् तस्मिन् ॥ मुद एव ऊर्मिः । ऊर्मेः प्रदश्चासौ विधुश्च तम् ॥ मदेन उद्यन्तः ये दुर्वादाः त एव द्विरदाः- गजाः तेषां वधे बद्धः उग्रः-घोरः निनदः यस्य तादृशम् ॥ नदी-गङ्गा पादे यस्य तस्य हरेः, आनन्दस्य आस्पदानि यानि पदानि, तेषां निदानं कारणम् ॥ दिविषदाम्-देवानाम् ॥ मुदम्-आनन्दरूपम् ॥ अमन्दं सुहृत् यस्य तादृशं पूर्णबोधम् ॥ मन्देतरा-अनल्पा,या हरिवित्-भगवद्विषयिणी धीः ज्ञानम् तदर्थम् ॥ वन्दे- अभिवादये । स्तौमि ॥

**कृपास्वापां क्षेपात् श्रितसुजनपापातपहराः**
**कृपाणाभाक्षेपात् क्षपितपरपक्षाख्यपदपाः ॥**
**अपाराकूपारापरपदयश पुष्टवपुषः**
**स्वपाङ्गाब्भिर्गोपाङ्घ्रिजपमधुपाः पान्तु गुरवः ॥ ४ ॥**

ಗುರುಗಳ ಕರುಣೆಯ ಜಲಧಾರೆಗೆ ನೀಗುವುದು ಶರಣುಹೊಕ್ಕ ಸಜ್ಜನರ ಪಾಪದ ಪರಿತಾಪ. ಪರಪಕ್ಷವೆಂಬ ವೃಕ್ಷಗಳ ಕತ್ತರಿಸುವಲ್ಲಿ ಕತ್ತಿಯಂತಿದೆ ಅವರ ಹರಿತ ಆಕ್ಷೇಪ. ಅಪಾರ ಸಾಗರಕ್ಕೆ ಮತ್ತೊಂದು ಹೆಸರು ಅವರ ವಿಶಾಲ ಕೀರ್ತಿಕಾಯದ ಪ್ರತಾಪ. ಗೋಪಾಲಕೃಷ್ಣನ ಪಾದಾರವಿಂದ ಮಕರಂದ ಹೀರುವಲ್ಲಿ ಅವರು ದುಂಬಿಗೆ ಅನುರೂಪ. ಆ ಗುರುಪರಂಪರೆ ನಮ್ಮನ್ನು ಪೊರೆಯಲಿ . ಕುಡಿನೋಟದ ಅಮೃತರಸ ಮಳೆಗರೆಯಲಿ.

कृपा एव सु आपः तासाम् । क्षेपात् निक्षेपात् ॥ श्रिताः-शरणगता ये सुजनास्तेषां पापरूपं आतपं हरन्तीति ॥ कृपाणः-खड्गः, तदाभो यो आक्षेपस्तस्मात् ॥ क्षपिताः नाशिताः ये परपक्षरूपाः पदपाः वृक्षाः येभ्यः ते ॥ अपारः, यः अकूपारः सागरः, इति यत् तदेव अपरं पदं वाचकं यस्य तादृशं यशः, तेन पुष्टं वपुः येषां ते ॥ सु-अपाङ्गयोः-नेत्रप्रान्तयोः आपः ताभिः ॥ गोपस्य अंघ्र्योः जप एव मधु पिबन्तीति ॥ अथवा

गोपस्य अङ्घ्रिरूपं जपं जपाकुसुमं (नामैकदेशे नाममात्रग्रहणात्) तत्र मधुपाः भृङ्गाः ॥ 'ऋक्पूरब्धूः पथामानक्षे' (५-४-७४) इति अप्रत्ययविधिः 'पथा'मिति सौत्रविधिना अनित्येति ज्ञायत इति 'रथ्याङ्घ्रिर्लभ्यते यथा' इति टीकाकारप्रयोगानुसारेण च 'कृपास्वापां' 'स्वपाङ्गाङ्घ्रिः' इत्युक्तम् ॥

**प्रचारार्चादीच्छाच्युतरुचिरचर्चाभिधसुधा-**
**मुचा वाचा प्राचामुचितपरिचारेऽतिचतुरम् ॥**
**निचोलेच्छान् नीचान् वचसि च चरच्चारुचरितं**
**वचस्स्वच्छं याचे मम च परमाचार्यमनिशम् ॥ ५ ॥**

ಪ್ರಸಿದ್ಧಿ - ಪ್ರಶಸ್ತಿಗಳ ಆಸೆಗೆ ತುತ್ತಾಗದೆ, ಸುಂದರ ವಿಚಾರದ ಅಮೃತವನ್ನು ಸುರಿಸುವ ಅವರ ಮಾತು, ಹಿರಿಯ ಜ್ಞಾನಿಗಳ ಸತ್ಕಾರದಲ್ಲಿ ಬಲು ಚತುರ. ಆ ಮಾತಿನ ಮುಂದೆ ಎದುರಾಗುವ ನೀಚರಿಗಾಗುತ್ತದೆ ಮುಸುಕುಹಾಕಿಕೊಳ್ಳಲು ಆತುರ. ಅವರ ಚರಿತೆ ಅತಿ ಸುಂದರ. ಅವರೇ ಆ ಶ್ರೀಜಾಲಿಹಾಳಾಚಾರ್ಯರೇ, ನನಗೆ ಪರಮ ಆಚಾರ್ಯ. ಅವರಲ್ಲಿ ಸ್ವಚ್ಛ ಮಾತುಗಳನ್ನು ಬೇಡುವುದೇ ಎನಗೆ ನಿತ್ಯಕಾರ್ಯ .

प्रचारः-प्रसिद्धिः, अर्चा-सम्मानम्, एतदादीनामिच्छया च्युता या रुचिरचर्चा, तदाख्या या सुधा, तां मुञ्चतीति-तया ॥ प्राचां-टीकाटिप्पणीप्रणेतॄणाम् ॥ उचितपरिचारे-योग्यपूजायाम् ॥ निचोलः- प्रच्छदपटः (स्त्रीपिधानपटरूपः 'बुरुका'नामकः) तस्य इच्छा येषां तादृशान् ॥ वचसि- वाग्व्यापारे ॥ नीचान् निचोलेच्छान् च चरत्- चारु चरितं यस्य तादृशम् ॥ मम च परमाचार्यम्- गुरूणां गुरुं जालीहाळाचार्यम् ॥ स्वच्छं-निर्दुष्टम् ॥ वचः ॥ याचे ॥ 'अकथितं च'(१-४-४१) इति द्वितीया ॥

**हितोत्पत्तेर्हेतोर्हरिचरमकृत्युत्तमतरोः**
**पतत् भक्त्या ग्रस्तं शुकवदवधूतार्यमुखतः ॥**
**श्रितश्रोतृव्रातामृतदफलमत्ताऽऽदयनयं**
**पिता पोतं पूतं विततमतिपूर्तं वितनुतान् ॥ ६ ॥**

ಶ್ರೀಮದ್ಭಾಗವತ ವೇದವ್ಯಾಸದೇವರ ಅಂತಿಮ ಕೃತಿ. ಆದರಿಂದಲೇ ಎಲ್ಲರಿಗೂ ಹಿತದ

ಉತ್ಪತ್ತಿ. ಅದಕ್ಕೆ ಅದಕ್ಕಾಗಿದೆ ಕಲ್ಪತರುವಿನ ಸ್ಥಿತಿಗತಿ. ಆ ಮರದಿಂದ ಜಾರಿದ ಒಂದು ಹಣ್ಣನ್ನು ಕಚ್ಚುತ್ತಿದೆ, ಶುಕಾಚಾರ್ಯರಂತೆ ಅವಧೂತ ಶಿರೋಮಣಿಗಳಾದ ಶ್ರೀವಿಷ್ಣುತೀರ್ಥರ ಮಾತೆಂಬ ಗಿಣಿಯ ಮೂತಿ. ಆ ಗಿಣಿಗೆ ಅಲ್ಲೇ ಅತಿಯಾದ ಭಕ್ತಿ, ಆ ಹಣ್ಣೇ ಸಾರೋದ್ಧಾರವೆಂಬ ಸುಂದರ ಕೃತಿ . ತಲೆ ಬಾಗಿ ಬಂದ ಕೇಳುಗರ ಗುಂಪಿಗೆ ಆ ಹಣ್ಣಿನ ಅಮೃತ ರಸ ಉಣ್ಣಿಸುತ್ತಾ ಆಸ್ವಾದಿಸುವ ಕರುಣಾಕೃತಿ - ಪೂಜ್ಯ ಪಿತೃಗಳ ಪ್ರವಚನದ ಮೂರುತಿ. ಆ ಎನ್ನ ತಂದೆ ಈ ಕೂಸನ್ನು ಪಾವನಗೊಳಿಸಲಿ. ವಿಶದವಾದ ಜ್ಞಾನವನ್ನು ತುಂಬಿಸಲಿ.

हितस्य उत्पत्तेः ॥ हेतोः ॥ हरिः- वेदव्यासरूपः, तस्य चरमकृतिः-भागवतम् तदाख्यः उत्तमतरुः तस्मात् ॥ पतत् ॥ शुकवत्-शुकाचार्यरूपशुकात् इव । अवधूतानां आर्यस्य-शिरोमणेः विष्णुतीर्थगुरोः मुखेन ॥ भक्त्या ग्रस्तम् ॥ श्रितानां श्रोतॄणां व्रातस्य अमृतं- मोक्षं ददाति यत्फलं तत् ॥ अत्ता- खादन् ॥ अत्तेति तृन्नन्तम् ॥ अयं पिता ॥ यत्फलम् आदयन् । खादयन् ॥ पोतं, मां ॥ पूतं - पवित्रं ॥ विततमत्या पूर्णप्रज्ञाचार्य-शास्त्रस्य ज्ञानेन पूर्तम्-पूर्णम् ॥ वितनुतान् ॥ 'सुप् तिङन्तं पदं'(१-४-१४)मिति सौत्रप्रयोगात् 'ङमो ह्रस्वादचि ङमुण्णित्य'मिति प्रायिकमिति 'अदयन्नय'मिति स्थाने 'आदयनयं' इत्युक्तं युक्तं ॥ 'अहनद्वत्सतनूक'मित्यादिवद्वा ॥

**भवे बद्धः क्लेशैः कुविषयवशैः पाशसदृशैः**
**जवेनाप्तैर्भीतो विमतिभरितो दुःखपतितः ॥**
**शिवाशावान् शावोऽप्यहमविदिताध्वाऽऽप्नुवमहो**
**निवासान्त्यश्रीवागुदितमतिदैवात् गुरुवरम् ॥ ७ ॥**

ಕೆಟ್ಟ ವಿಷಯಗಳತ್ತ ಸೆಳೆವ ಕ್ಲೇಶಪಾಶ ಸಂಸಾರದಲ್ಲಿ ಎನ್ನನ್ನು ಬಂಧಿಸಿದೆ. ಅದರ ವೇಗ ಭಯಗೊಳಿಸಿದೆ. ಏನೂ ತೋಚದಂತಾಗಿ ದುಃಖ ಮೇಲೆರಗಿದೆ. ಒಳ್ಳೆದಾಗಬೇಕೆಂಬ ಆಸೆಯೂ ಬತ್ತಿಲ್ಲ. ಆದರೆ ಅದಕ್ಕೆ ಹಾದಿ ಗೊತ್ತಿಲ್ಲ. ಆಗ ನನಗೆ ಜಾಲೀಹಾಳ ಶ್ರೀನಿವಾಸಾಚಾರ್ಯರು ಸಿಕ್ಕಿದ್ದು ಪರಮಾಶ್ಚರ್ಯದ ಉತ್ಸವ. ಅದೂ ಪರಮ ಗುರುಗಳಾಗಿ ದೊರೆತಿರುವುದು ಎನ್ನ ಸುದೈವ.

जवेन-वेगेन ॥ शिवस्य-मङ्गलस्य आशावान् ॥ शावः-शावकः शिशुरिति यावत् ॥

आविदितः अध्वा पन्थाः यस्य तादृशः ॥ अहम् ॥ अतिदैवात् अत्यन्तादृष्टवशात् ॥ निवासान्त्यश्रीवागुदितम्-श्रीनिवासाचार्यनामानं ॥ गुरुवरं-गुरोः वरं परमगुरुं मातामहम् ॥ आप्रवम् -अलभै ॥

**गुरो कीर्त्या मेरो हरिविरतिवारोऽमरमरो**
**दुराचारे भीरो रुचिरपदरोचिर्जितभरो ॥**
**पुरो वादे शूरोदितमतशिरोनाशदशरो**
**गिरोऽविद्योत्तारो भव मम सुरोदारसुतरो ॥ ८ ॥**

ಮೇರುಕೀರ್ತಿಯ ಮೂರ್ತಿಯೇ ! ಹರಿಯ ಬಗ್ಗೆ ವಿರಕ್ತಿಯೆಂಬ ನೀರಿಗೆ ಸಗ್ಗದ ಮರುಭೂಮಿಯೇ ! ಕೆಟ್ಟ ನಡೆತೆಗೆ ಭಯಗೊಳ್ಳುವ ಸಾಧುವೇ ! ಸುವರ್ಣದ ಕಳೆ ಗೆಲ್ಲುವ ಪದವರ್ಣಗಳ ಚಲುವಿನ ತಾಣವೇ ! ಶೌರ್ಯದಿಂದ ಎದುರು ನಿಂತು ವಾದಿಸುವರ ಶಿರಕ್ಕೆ ಹರಿತವಾಗಿ ಚುಚ್ಚುವ ಬಾಣವೇ ! ಓ ಎನ್ನ ದೇವತರುವೇ ! ಗುರುವೇ ! ಸದಾಗಮಗಳ ಅಜ್ಞಾನವನ್ನು ಪರಿಹರಿಸಲು ಬೇಕೆನಗೆ ನೀವೇ !

कीर्त्या मेरो-मेरुपर्वतसदृश । हरिविरतेः - हरौ वैराग्यस्य तदाख्यस्य, वारः-जलस्य ॥ अमरमरो-मरुभूमिसदृश । मरावपि कदाचित् जलसम्भावनावारणाय अमरत्वं निवेशितम् ॥ सदा भगवत्परेत्यर्थः ॥ दुराचारे भीरो-भयसहित । सदाचारसम्पन्नेत्यर्थः ॥ रुचिराणि यानि पदानि तेषां रोचिषा जितः भरुः कनकं भर्ता वा राजा येन तादृश ॥ 'भरुर्भर्तृकनकयोः' हैमे ॥ वादे, पुरः-पुरस्तात् ॥ आगत्य ये वदन्ति ते शूराः तैः उदिता ये मतास्तेषां शिरसां नाशदः यः शरुः-शरः तादृश ॥ 'शरुः कोपे शरे वज्रे' इति हैमे ॥ मम सुरोदारसुतरो- देवतरुसदृश ॥ हे गुरो मातामह ! त्वम् ॥ गिरः-वेदवाचः या अविद्या-तस्या उत्तारः उत्तरणकर्ता उत्तररूपो वा भव ॥

**दिशा येषाकेशासमसुमयशःक्षीरविशदा-**
**कृशाक्षेष्टादोषान्वयशरधिदोषाकृदमलः ॥**
**सुशिष्याशावर्षो नवदशमनीषान्त्यफलस-**
**दृशो दग्ध्वा दोषान् श्रुतिमतिविशेषान् दिशतु मे ॥ ९ ॥**

ದಿಸೆಗಳೆಂಬ ಹೆಂಗಸರ ಮುಡಿಗೆ ಅನುಪಮ ಮಲ್ಲಿಗೆಯ ಕುಸುಮ ಎಂದಾಗುವ ಕೀರ್ತಿಯೇ ಅಲ್ಲಿ ಹಾಲು. ಪೂರ್ಣಪ್ರಜ್ಞರ ಪೀಠದಲ್ಲಿರುವ ಶ್ರೀರಘೋತ್ತಮರಿಗೆ ಅಚ್ಚು ಮೆಚ್ಚಾದ ತಿಮ್ಮಣ್ಣ ಭಟ್ಟರ ಮನೆತನವೇ ಆ ಹಾಲಿನ ಕಡಲು. ಅಲ್ಲಿ ಇವರು, ನಿರ್ಮಲ ಹುಣ್ಣಿಮೆ ಚಂದಿರ. ಶಿಷ್ಯರ ಆಸೆಗಳ ಹರಿಸಿ ಹಾರೈಸುವ ಧೀರ ಉದಾರ. ಅಭಿನವ ಆನಂದತೀರ್ಥರೆನಿಸಿದ ಶ್ರೀಸತ್ಯಧ್ಯಾನತೀರ್ಥರ ವಿದ್ಯಾಸಂತಾನದ ಅಂತಿಮ ಫಲ. ಆನಂದಕ್ಕೆ ಮೂಲ. ಈ ಪೂಜ್ಯ ಆಚಾರ್ಯರು ಎನ್ನ ದೋಷಗಳನ್ನು ಸುಟ್ಟು ಹಾಕಲಿ. ಶ್ರವಣ - ಮನನಗಳ ವಿಶೇಷತೆಯನ್ನು ಹುಟ್ಟುಹಾಕಲಿ.

दिशा एव या योषा स्त्रीः, तस्याः केशानां असमं असदृशं यत्सुमं, तदेव यद्यशः, तदेव क्षीरं यस्य तादृशः, विशदः -निर्मलः, अकृशाक्षस्य-पूर्णप्रज्ञाचार्यस्य (तद्वंशजरघूत्तमगुरोः) इष्टः, अदोषः, यः अन्वयः वंश एव शरधिः समुद्रः तस्य, दोषाकृत्-चन्द्रः ।। अमलः- निर्मलः ।। सु-समीचीनाः स्वतिरोधानेऽपि स्वसेवासंसक्ताः ये शिष्यास्तेषामाशानां अपेक्षाणां वर्षः वर्षणं यस्मात्तादृशः ।। नवदशमनीषस्य- अभिनवानन्दतीर्थस्य श्रीसत्यध्यानतीर्थस्य अन्त्यफलं-अन्तिमशिष्यरूपः सुखरूपो वा यस्तस्य, सती समीचीना दशा अवस्था यस्य तादृशः ।। पूज्याचार्यः, मे दोषान् दग्ध्वा, मे श्रुतिमत्योः विशेषान् दिशतु ।। इति प्रार्थना ।।

**।। इदं भागवतागतिप्रकरणम् ।। १ ।।**

भागवतः भगवद्भक्तः यः पूज्याचार्यः तस्य आगतिः मनसि आगमनं स्मरणमिति यावत् ।। भागवतकृतेरिव भागवतकृतिनः अस्याऽऽगतिरपि सम्पुटाकारेण ।। भागवतस्य देशतः अस्य भागवतस्य कालतः । पूर्वकालत आगतिः दिशायोषेत्यादिनोक्ता ।। पश्चात्तनकालतः सुशिष्याशावर्ष इति ।। मध्यकालतः दशमनीषेति ।। ''तदनेन श्रवणादिरूपद्वितीये नवके स्मरणाख्यो भागवतधर्मः सूचितो भवति ।।'' (भा.सा.पृ.१७.प.६)

**गजार्च्याजाड्यव्रज्जालिकलिजरुजाजायुजयदो-**

**त्तिजात्योजोराजद्द्विजनिगुरुराजात्मजवरः ।।**

**रुजाज्याभृद्वज्रो जनजलजजालोर्जजनकः**
**भवाधेर्भैषज्यं निजभजनभोज्यं सृजतु मे ॥ १० ॥**

ಗಜದಿಂದ ಪೂಜೆಗೊಂಡ ಶ್ರೀಹರಿಯ ಪಾದಾರವಿಂದದಲ್ಲಿ ಅವರೊಂದು ದುಂಬಿ. ಕಲಿಯಿಂದ ಬರುವ ಕಾಮಾದಿ ರೋಗಕ್ಕೆ ಔಷಧಿ - ಜಯಕ್ಕೆ ಸಿದ್ಧಿ ಅವರ ಮಾತು ರಾಮ-ಗೋವಿಂದ ಹರೇ ಇತ್ಯಾದಿ ಆ ಮಾತಿನ ಮಹಿಮೆಯಿಂದ ವಿರಾಜಿಸಿದ ದ್ವಿಜರೇ ಸಾತ್ವಿಕ ಗುರುರಾಜಾಚಾರ್ಯರು. ಅವರ ಹಿರಿ ಪುತ್ರ ಶ್ರೀ ಆಚಾರ್ಯರು. ವಜ್ರಕಾಯರು. ಬಂಧು-ಬಾಂಧವಾದಿ ಎಲ್ಲ ಜನರ ಅರಳಿಸುವಂತೆ ಬೆಳೆದವರು. ಅವರಲ್ಲಿ ನಾನು ಭವರೋಗದ ಔಷಧವನ್ನು ಬೇಡುವೆ. ಅದು ಅವರನ್ನು ಭಜಿಸುವುದೆಂದೇ ತಿಳಿಯುವೆ.

गजेन अर्च्यः यः अजः -परमात्मा, तस्य अङ्घ्रिरूपे अब्जे कमले, अलिः-भृङ्गः, तथा कलेः जाता या रुजा कामक्रोधादिरोगाः तेषां जायुः-औषधरूपा, जयदा च या, उक्तिः तज्जात्याः- तद्वृन्दस्य ओजसा-तेजसा राजन् यः द्विजनिः-ब्राह्मणः गुरुराजाचार्यः तस्य आत्मजाः-पुत्राः तेषु वरः-प्रथमः ॥ रुजा रोग एव ज्याभृत्-भूभृत् तस्य वज्रः ॥ जना एव जलजास्तेषां जालस्य-वृन्दस्य ऊर्जस्य-विकासस्य जनकः ॥ आचार्यः ॥ भवरोगस्य औषधम् ॥ निजस्य - स्वस्य भजनरूपं भोज्यम् ॥ मे - मदर्थं ॥ सृजतु-त्यजतु दिशत्विति यावत् ॥

**॥ इदं राजविरागप्रकरणम् ॥ २ ॥**

राजा-गुरुराजः । नामैकदेशे नाममात्रग्रहणात् । तस्य वौ -परमात्मनि रागः राजविरागः । 'विःपक्षिपरमात्मनोः' । उक्तं चात्र गजार्च्येत्यादिना प्रकृतम् ॥ परीक्षित्राजस्य पुन्नाम नरकत्राणं भागवतेन कृतमिति भागवतं तस्य पुत्ररूपं आत्मजमित्युच्यते यथा तथा भागवतः अयं आचार्यः गुरुराजस्य पुत्रः इत्यात्मजः । निरूपितमेतत् कलिजेत्यादिना ॥ निजस्य-स्वस्य स्वीयस्य भगवतः,भजनम्-माहात्म्यश्रवणं, तत्कीर्तनं, अर्चनं, वन्दनं, सख्यं इत्यर्थः ॥ 'तदनेन द्वितीये नवके तन्माहात्म्यश्रवणं कीर्तनं तस्य तन्नाम्नां च । अर्चनं वन्दनं सख्यमिति पञ्चकं सूचितं भवति ॥' (भा.सा.पृ२८.प११) एवमुत्तरत्र ।

**सुपक्षश्रीशेक्षक्षपितपरकक्षश्रुतिगगो-**
**चरत्पाराशर्यप्रियतनयधीरागमवरात् ॥**
**द्युनद्याभर्तज्ञोरुगिरि गुरुराजाय जनिमान्**
**मनो मे निर्मानं सपदि तनुतात्स्वागमनतः ॥ ११ ॥**

ಅವರು ಹೇಳಿದ್ದೇ ಸಿದ್ಧಾಂತ. ಅಲ್ಲಿ ಶ್ರೀಹರಿಯ ಪ್ರೀತಿ ಅತ್ಯಂತ. ಪರಪಕ್ಷಗಳಿಗೊ ಮತ್ತೆ ಅಂತ. ವೇದದ ವಾಕ್ಯದಲ್ಲೇ ಅವರ ಸಂಚಾರ. ಅವರೇ ವೇದವ್ಯಾಸದೇವರ ಪ್ರೀತಿಯ ಕುಮಾರ ಶ್ರೀಮದಾಚಾರ್ಯ. ಅವರ ಆಗಮವೇ ಒಂದು ವರ. ಶ್ರೀಸತ್ಯಜ್ಞಾನತೀರ್ಥರ ಉಪದೇಶವೇ ಗಂಗಾತೀರ. ಅಲ್ಲಿ ಗುರುರಾಜರಿಗಾಗಿ ಜನಿಸಿದ ಭಾಗವತ, ಶ್ರೀ ಪೂಜ್ಯ ಆಚಾರ್ಯರು. ಅವರು ನನ್ನ ಮನದ ಅಹಂಕಾರವನ್ನು ಕೂಡಲೆ ಕಳೆಸಲಿ. ಅದಕ್ಕಾಗಿ ತಮ್ಮ ಗ್ರಂಥಗಳ ಪರಿಜ್ಞಾನವ ಎನ್ನಲ್ಲಿ ಬೆಳೆಸಲಿ.

सु-श्रेष्ठः पक्षः -सिद्धान्तपक्षः यस्य तादृशः, तथा, श्रीशे ईक्षा-धीः दृष्टिर्वा यस्य तादृशः, तथा, क्षपितः परकक्षः येन तादृशः, तथा, श्रुतिगाः-वेदगता ये गावः - वाक्यानि तत्र, चरन्-विचरन्, तथा, पाराशर्यस्य प्रियतनयः यः धीरः-मध्वाचार्यः, तस्य आगमः-शास्त्रं तद्रूपवरात् अथ वा आगमजातश्रीनिवासप्रसादात् ॥ द्युनद्याभायां-गङ्गासदृश्यां ऋतज्ञस्य-सत्यज्ञानतीर्थस्य उरुगिरि- उत्कृष्टवाचि सति ॥ गुरुराजाचार्याय ॥ जनिमान्-प्रादुर्भाववान् ॥ पूज्याचार्यः ॥ सपदि ॥ स्वागमनतः-स्वस्य आगमनेन, स्वस्य आगमाः ग्रन्थास्तैश्च ॥ मे मनः- निर्मानं -निरहङ्कारं ॥ तनुतात्-करोतु ॥

**॥ इदं शुकागमप्रकरणम् ॥ ३ ॥**

भागवताविर्भावाय व्यासपुत्रागमः खल्वावश्यकः ॥ प्रकृते भागवतस्य पूज्याचार्यस्य आविर्भावार्थम् व्यासपुत्रस्य मध्वस्य आगमः-शास्त्रमावश्यकम् ॥ भागवताविर्भावः गङ्गातीरे । प्रकृते सत्यज्ञानतीर्थानां वाग्गङ्गातीरे । परीक्षित्राजाय इव गुरुराजाय भागवतस्याविर्भावः । शुकाचार्यस्येव श्रीमदाचार्यस्य अन्तबहिर्गुरुत्वं उक्तम् सुपक्षेत्यादिना । पाराशर्यप्रियतनयेत्यनेन यं प्रवृजन्तमित्युक्तमन्तर्गुरुत्वम्, सुपक्षेत्यनेन

बहिर्गुरुत्वम्, श्रुतिगगोचरदित्यनेन 'गामटमानोनपेक्ष्य' इत्याद्युक्तं प्रतिपादितम् ।। शुकः अहङ्कारतत्त्वाभिमानी । तदनुसारेण मनसः अहङ्कारदोषनाशः भवतीति स एव प्रार्थितः ।।

**ततार्थोद्यद्वेदत्रिभुवनयशोदार्भकमुख-**
**श्रयद्गानत्राणप्रणवमुखमन्त्रार्थचतुरः ।।**
**अशोकाशाधीशाश्रयकुशलशीर्षः शुचिरुचिः**
**सतीसम्पज्जातीविरतिविरती रातु स कृती ।।१२ ।।**

ಅರ್ಥವಿಸ್ತಾರದಿಂದ ಹರಡಿರುವ ಮೂರುವೇದದ ತ್ರಿಲೋಕವನ್ನು, ಯಶೋದೆಯ ಮಗನಂತೆ ಮುಖದಲ್ಲಿ ಹಿಡಿದವರು ಇವರು. ಶರಣಾದವರಿಗೆ ಗಾನ - ತ್ರಾಣ ನೀಡುವ ಗಾಯತ್ರೀ ಪ್ರಣವಾದಿ ಮಂತ್ರಗಳ ಅರ್ಥವನ್ನು ಬಲ್ಲವರು. ಅಜ್ಞಾನಾದಿಶೋಕ ಕಳೆಸುವ ವಿದ್ಯಾಸರಸ್ವತಿಗೆ ಹಾಗು ಸರಸ್ವತೀಪತಿಗಳಾದ ಬ್ರಹ್ಮದೇವರಿಗೆ ಒಳಗೆ ಹೊರಗೆ ಸುಂದರ ನೆಲೆ ಇವರ ಶಿಖಾಮಂಡಿತ ತಲೆ. ಸದಾಚಾರವೇ ಇವರ ಕಳೆ . ಇಂತಹ ಆಚಾರ್ಯರು ಹೆಂಡತಿ - ಸಂಪತ್ತು ಇತ್ಯಾದಿ ವಿಷಯಗಳ ವೈರಾಗ್ಯವನ್ನು ಮತ್ತು ಶ್ರೀಹರಿಯಲ್ಲಿ ಅನುರಾಗವನ್ನು ದಯಪಾಲಿಸಲಿ.

ततः-विततः ये अर्थास्तैरुद्यन्त ये वेदास्तदात्मकस्य त्रिभुवनस्य यशोदार्भक-श्रीकृष्णवदनवद्धियमानः यः ।। श्रयतां सुजनानां गानं त्राणं यस्मात्तादृशः प्रणवमुखः मन्त्रः तदर्थे चतुरः ।। गायत्र्यादिमन्त्रजपाधिकारी इत्यर्थः ।। अशोका या आशा - सरस्वती तस्या अधीशस्य ब्रह्मणः आश्रयं कुशलशीर्षं शिखामण्डितशिरः यस्य तादृशः । आशा चात्र सरस्वतीत्यत अशोकेति विशेषणम् ।। अथ वा अशोका- न विद्यते भवशोकः यस्यास्तादृशी या आशा- अपेक्षा तस्या अधीशस्य - श्रेष्ठस्य आश्रयं कुशलशीर्षं यस्य सः ।। सः कृती ।। आचार्यः ।। शुचौ- सदाचारे रुचिः यस्य सः ।। सती - पत्नी सम्पज्जाती - ऐश्वर्यव्यूहः, एतयोः, विरतिः तथा वौ -परमात्मनि रतिरित्युभयं रातु- ददातु ।।

॥ इदं संक्षिप्तशास्त्रार्थप्रकरणम् ॥ ४ ॥

''शास्त्रेष्वियानेव सुनिश्चितो नृणां क्षेमस्य सम्यग्विमृशेषु हेतुः ॥
असङ्ग आत्मव्यतिरिक्तवस्तुनि दृढा रतिर्ब्रह्मणि निर्गुणे च या ॥''

इति संक्षिप्तशास्त्रार्थः प्रार्थितः सतीत्यादिना ॥ ततार्थोद्यदित्यादिना 'दृढा रतिर्ब्रह्मणि निर्गुणे' वर्णिता ॥ 'असङ्गः आत्मव्यतिरिक्तवस्तुनि' निरूपितः अशोकाशेत्यादिभ्याम् ॥ यशोदार्भकमुखपदेन सकलवेदानां वासुदेवपरत्वं स्मारितम् ॥ महान्नेवार्थः स्फुरति श्रद्धाधनानामित्यलम् ॥

**शुभारम्भः शम्भुप्रभृतिबुधसम्भाव्यभगवत्-**
**सुभाषाम्भश्शुभ्राद्भुतकवनगम्भीरभुवने ॥**
**सभार्यो भान्वाभः कुकवनतमोभक्षणचणो**
**विभिन्द्याद्रम्भाभां विषयसुरतिं भार्गवनिभः ॥१३ ॥**

ರುದ್ರಾದಿ ವಿಬುಧ ವಂದಿತ ಶ್ರೀಮದಾಚಾರ್ಯರ ವಾಕ್‌ತೀರ್ಥದಿಂದಲೇ ಕವಿತಾ ಪ್ರಪಂಚಕ್ಕೆ ಪರಿಶುದ್ಧಿಯು. ಅಲ್ಲಿ ಆಚಾರ್ಯರಿಗೆ ಶುಭ ಆರಂಭದ ಸಿದ್ಧಿಯು. ಆಗಲೇ ಇವರು ಭಾರ್ಯಸಹಿತರು. ಆದರೂ ಸಭೆಯಲ್ಲಿ ಆರ್ಯರು. ಮೊದಲಿಗರು. ಪರಕಾವ್ಯದ ಕತ್ತಲೆಯನ್ನು ನುಂಗಿ ಬೆಳಗುವ ಸೂರ್ಯರು. ಇಂಥಾ ಶ್ರೀ ಆಚಾರ್ಯರು ನನ್ನ ವಿಷಯಾಸಕ್ತಿಯೆಂಬ ಬಾಳೆಯ ಕಂದನ್ನು ಕತ್ತರಿಸಲು ಪರಶುರಾಮನಂತೆ ಅನು-ಗ್ರಾಹಕರಾಗಲಿ.

शुभः आरम्भः यस्य सः । कुत्रेत्याह ॥ शाम्विति ॥ शम्भुः - पार्वतीपरिणयकर्ता । सः प्रभृतिः पूर्वः येषां तादृशैः बुधैः- ज्ञानिभिः सम्भाव्यः यः भगवान्- भगवत्पादाचार्यः तस्य, सु-समीचीना या भाषास्ता एव अम्भांसि यानि तैः शुभ्रं , अद्भुतं यत् कवनमेव गाम्भीरभुवनं तस्मिन् ॥ भार्यया सहितः तथापि सभाया आर्य एवासीत् । कुकवनानि-परकाव्यान्येव तमांसि तेषां भक्षणे चणः । श्री आचार्यः ॥ भार्गवः -परशुरामः स इव सन् । मे रम्भा-कदलीकाण्डः तत्सदृशीं विषयसुरतिं विभिन्द्यात् । रम्भा योषित् तदाख्यामिति च ॥

## ॥ इदं वैराग्यप्रकरणम् ॥ ५ ॥

वैराग्यवर्णकं प्रकरणम् । विरागी वर्णित आचार्यः । स च भावप्रधानो निर्देशः । कृताध्ययनाः सर्वे सभार्याः । स तु सभार्यः कृताध्यनः । अतो हि सभाया आर्य आसीदित्यहो वैराग्यमाचार्यीयम् । रागश्च सुदृढः स्नेहः । स चान्तःकरणगुणः । अन्तश्च सन्ति षडरयः कामादयः । तत्र कृतदृढस्नेहेन बहिर्भगवदितरत्र भवति सङ्गः । बाहीकरम्भादिसङ्गत्याग एव न विरागः । किन्त्वान्तरिकरिपुषट्कविजय एव सः । अन्तश्शत्रुप्रभावं पौरुषं प्रदर्शयति बहिश्चक्षुषां तदीयकविता । अतो हि परकीयानि कुकवनानि । तादृशपरकाव्यान्धकारभक्षकोऽपि भानुरिव खरो निर्मलश्चासीत् । तथैव पार्वतीपरिणयचम्पूप्रभृतिकाव्यानि भगवत्पराणि भागवतपराण्यपि निर्मितानि भगवत्पादाचार्यसिद्धान्तसंशुद्धानि । अतो हि वैराग्यमहो ॥ भार्गवः परशुना रम्भामिव वनान्यभागवतराजान्यानपि बिभेद । अतो हि भार्गवनिभस्सन्नित्यस्य चारुता ॥ लौकिकमार्गासक्तिं मातृगतां अयं किल बिभेद ॥ इत्यलं पल्लवितेन ॥

**ऋतध्यानाख्यानां भुवनमहितानामथ समा-**
**गमाद्दैवाद्धीमान् समसमयधामातिमतिमान् ॥**
**मठे पाठश्वासः सहजमतिभासाऽप्यसदृशः**
**दृशो दिश्याद्धातागमगमहतामागमसुधाम् ॥ १४ ॥**

ಜಗಕೆಲ್ಲ ಪೂಜ್ಯರಾದ ಶ್ರೀಸತ್ಯಧ್ಯಾನರ ಸಮಾಗಮ ಇವರಿಗೆ ದೈವದ ಸಂಗಮ. ಎಲ್ಲ ಶಾಸ್ತ್ರಗಳ ಅಂಗಳದಲ್ಲಿ ನಲಿವುದು ಇವರ ಧೀಮಂತಿಕೆಯ ಮಹಿಮಾ. ಮಠದಲ್ಲಿ ಪಾಠದ ಉಸಿರಾಟವೇ ಜೀವನಕ್ರಮ. ಸಹಜ ಬುದ್ಧಿಪ್ರತಿಭೆಯಲ್ಲಿ ಇವರು ನಿತ್ಯವೂ ಅನುಪಮ. ಇಂಥಾ ಪೂಜ್ಯ ಆಚಾರ್ಯರು ಮಧ್ವಮತದಲ್ಲಿ ನಲಿವ ಟೀಕಾಚಾರ್ಯಾದಿ ಮಹನೀಯರ ಸುಧಾದಿ ಗ್ರಂಥ ಸುಧೆಯನ್ನು ಅನುಗ್ರಹಿಸಲಿ. ಜ್ಞಾನ ನೀಡಲಿ.

भुवनमहितानां, ऋतध्यानः सत्यध्यान इत्याख्या येषां तेषाम् । दैवात् समागमात्-

दर्शनभाग्यलाभात् । धीमान्-आचार्यः । समेषु समयाख्यधामसु प्रवेशशाली अभवत् ॥ मठे पाठ एव श्वासः यस्य तादृशः । सहजा- अकृत्रिमा या मतिस्तस्याः तेजसा असदृशः श्रीआचार्यः ॥ वातागमः- समीरसमयः । तत्र ये गच्छन्ति महान्तः टीकाकृत्पादादयः तदागमरूपसुधाम् मे दृशे दियात् ॥

**॥ इदं महत्समागम प्रकरणम् ॥ ६ ॥**

महान्-ऋतध्यानः । कुतः ? यतो ऋते जगतस्सत्यत्व एव मतिमान् । अतो हि भुवनमहितः । तस्य सम्यक् आगमः महत्समागमः । महत्समागमः महद्दर्शनभाग्यम् । ग्रामे वदनदर्शनम् । मठे दर्शनदर्शनम् । अयं च समागमो दैवादेव । उक्तं हि ''जनस्य कृष्णाद्विमुखस्य दैवा''दित्यादिना । तत्फलम् समसमयेति ॥

**सदा वादानन्दऽनलसनवमोदाभिधयतेः**
**प्रियः शिष्यो न्यायाद्यनुवदनतोयालयचयैः ॥**
**गुरोस्तन्वन् सेवाममलनिजभावामृतयुतै-**
**र्महत्सेवाभाग्यं मम च करयोग्यं स कुरुतात् ॥ १५ ॥**

ಸದಾ ವಾದ ವಿನೋದದಲ್ಲಿ ಆಲಸ್ಯವಿಲ್ಲದೆ ನಿರತರಾದ ಶ್ರೀಸತ್ಯಧ್ಯಾನತೀರ್ಥರಿಗೆ ಇವರೇ ಪ್ರಿಯಶಿಷ್ಯರು. ನ್ಯಾಯಶಾಸ್ತ್ರಾದಿ ಅನುವಾದ ಕುಸುಮಗಳಿಂದ ನಿರ್ಮಲ ಭಕ್ತಿ-ಭಾವ ಅಮೃತದ ಮಕರಂದದೊಡನೆ ಗುರುಸೇವೆ ಮಾಡಿದವರು. ಈ ಪೂಜ್ಯ ಆಚಾರ್ಯರು ಮಹಜ್ಜನರ ಸೇವಿಸುವ ಭಾಗ್ಯವನ್ನು ನನ್ನ ಕೈಗೂ ಎಟುಕುವಂತೆ ಅನುಗ್ರಹಿಸಲಿ.

सदा वादेन य आनन्दस्तस्मिन् अनलसः नवः अभिनवः आनन्दतीर्थ इत्यभिधा यस्य तादृशः यतिः श्रीसत्यध्यानतीर्थः तस्य । प्रियः शिष्यः श्रीआचार्यः । कुत इत्यत आह । न्यायेति । न्यायादिशास्त्राणां अनुवादरूपाणां तोयालयानां कमलपुष्पाणां गुच्छैः । तद्विशेषणम्-अमलः निजः यः भक्तिभावस्स एव अमृतं तेन युतैरिति । तैः गुरोः सेवां तन्वन् श्रीआचार्यः । महत्सेवारूपं भाग्यम् । मम च करयोग्यं कुरुतात् । इति प्रार्थना ॥

**॥ इदं महत्सेवाप्रशंसाप्रकरणम् ॥ ७ ॥**

महान्-श्रीसत्यध्यानतीर्थप्रभुः । कुतः ? यतो हि वादानन्दानलसः । एवं नवमोदाभिधश्च ॥ तस्य सेवा अनुवादरूपा । अतादृशी न तस्य रुचिरा । तादृशसेवाकृदिति हि प्रियः श्री आचार्यः । तिरुपतिपुरे पद्मसरोवरतटे सभायामियं प्रथिता ॥ तथान्यत्रोत्तरत्ररत्र च ॥

**यथार्थह्रीहीनस्वखरवचनानन्यवशगा-**
**नृतान्योक्तीर्भिन्दन् गुरुवरमनिन्दन्नथ नमन् ॥**
**गुरुप्रेष्ठं श्रेष्ठं श्रित नृहरिमिष्टार्थदमटन्**
**महान्निन्दारोगं हर वितर रागं त्वयि गुरो ॥ १६ ॥**

ಸತ್ಯದಲ್ಲಿ ನಾಚಿಕೆಯಿಲ್ಲದ ತನ್ನ ನಿಷ್ಠುರಮಾತಿನಿಂದ ಯಾರಿಗೂ ಭಾಗದ ಓ ಗುರುವೇ! ಕುಹಕಿಗಳ ಸುಳ್ಳು ಆರೋಪಗಳನ್ನು ಸೀಳುತ್ತ, ಗುರುವರ್ಯ ಸತ್ಯಧ್ಯಾನತೀರ್ಥರನ್ನು ವಂದಿಸಿ, ಅವರಿಗೆ ಅಚ್ಚುಮೆಚ್ಚಿನ ಶ್ರೀನರಸಿಂಹಾಚಾರ್ಯರನ್ನು ಆಶ್ರಯಿಸಿ, ಇಷ್ಟವಾದ ವಿದ್ಯೆಯನ್ನು ಗಳಿಸಿದ ಧೀರರೇ! ಮಹನ್ನಿಂದೆಯೆಂಬ ರೋಗವನ್ನು ತಪ್ಪಿಸಿರಿ. ನಿಮ್ಮಲ್ಲಿ ಅನುರಾಗವನ್ನು ಕರುಣಿಸಿರಿ.

यथार्थम्-प्रमितम् । ह्री- लज्जा तया रहितम् यत् स्वस्य खरवचनं तीक्ष्णवचनं तेन अन्यवशगः न भवतीति अनन्यवशगः । तत्सम्बुद्धिः ॥ अनृताः -असत्यभूता या अन्येषां आरोपोक्तयस्ताः । भिन्दन् । अथ - तादृशानृतान्योक्तिवृत्तानन्तरम् । गुरुवरं - श्रीसत्यध्यानतीर्थम् । अनिन्दन् तथा नमन् सन् ॥ गुरुप्रेष्ठं श्रेष्ठं इष्टार्थस्य विद्याभिधस्य दातारं नृहरिं - वरखेडिनरसिंहाचार्यम् । अटन् सन् श्रित हे श्रीआचार्यगुरो । महन्निन्दारूपरोगं हर । तथा त्वयि रागं वितर ॥

**॥ इदं महन्निन्दावर्जनप्रकरणम् ॥ ८ ॥**

महान्- श्रीसत्यध्यानतीर्थः । तन्निन्दा परित्यक्ता । दुर्मानिनामनृतगिरा गुरुमप्रसन्नमिव वीक्षणेन सा प्रसक्ता । अभागवतास्तदा निन्दन्ति । परं परमभागवतः खल्वाचार्यः । अतः पुनरस्यानवसरः स्यादिति गुरुवरं नत्वा

निर्गतः । न च तावतापि तन्निन्दा । तादृशगुरुवर्यातिप्रियस्यैवाश्रयणेन गुरुसम्मतकार्यकारित्वात् गुरुप्रेम्ण एव जननात् । ईदृशमसदृशमाचार्यीयं महन्निन्दावर्जनम् ॥

**परीक्षायां दक्षः स्वपरसमयेक्षः कृतिपतिः**
**समर्थो वाक्यार्थे बुधसदसि पार्थो युधि यथा ॥**
**गुरुप्रेयान्न्यायामृतनिहतमायाविसमयः**
**प्रशंसामात्मीयां विगमयतु मायां मतिमयाम् ॥ १७ ॥**

ಸ್ವ-ಪರ ಮತಗಳ ಬಲ್ಲ ಈ ಆಚಾರ್ಯರು ಪರೀಕ್ಷೆಯಲ್ಲಿ ಚತುರರು. ಪಂಡಿತರಾಜರು. ವಾಕ್ಯಾರ್ಥದಲ್ಲಿ ಏಕಾಂಗಿಯಾಗಿ ಹೋರಾಡಿದ ಪಾರ್ಥನಂತೆ ಅತಿ ಸಮರ್ಥರು. ಗುರುಗಳ ಪ್ರೀತಿಪಾತ್ರರು. ನ್ಯಾಯಾಮೃತದಿಂದ ಹೊಂಚುಹಾಕುವ ಮಂದಿಯ ದುರಭಿಮಾನವನ್ನು ಕಳೆಸಿದರು. ಈ ಪೂಜ್ಯ ಆಚಾರ್ಯರು ಮನದ ತುಂಬ ತುಂಬಿರುವ ಆತ್ಮಪ್ರಶಂಸೆಯ ಮಾಯೆಯನ್ನು ಪರಿಹರಿಸಲಿ.

परीक्षायाम् । स्वपरसमयेषु ईक्षा यस्य स सन् दक्षः । अत एव कृतिपतिः -पण्डितराजः । ततश्च ॥ वाक्यार्थे बुधसदसि समर्थः । उपमा - युधि यथा पार्थः समर्थः तथेति ॥ परीक्षाविजयेन गुरुप्रेयान् - गुरोः पितृपादस्य बहुप्रियः । गुरुदक्षिणाया दापयितेत्यर्थः । वाक्यार्थविजयेन तु गुरोः -श्रीसत्यध्यानतीर्थस्य प्रिय इत्यर्थः । ज्ञानव्याप्यादिषु सम्प्राप्तविजयमालासमर्पणदीक्ष इत्यर्थः । इतश्च गुरुप्रेयान् यतः न्यायामृतनिहतमायाविसमयः । परीक्षाप्रसङ्गे माया - दुरभिमानं येषामस्ति तादृशा निराकृताः । वाक्यार्थे तु - अनन्तकृष्णप्रभृतयः । तादृशः श्रीआचार्यः । मतिमयां मायां आत्मीयां प्रशंसां विगमयतु॥

**॥ आत्मप्रशंसावर्जनप्रकरणम् ॥ ९ ॥**

परकृता स्वकृता इति द्विविधा आत्मप्रशंसा । परकृतैव वर्जिता सभासु गुरोरनुग्रह इत्युक्त्या । किमुत स्वकृता वर्जितेति वक्तव्यम् । गुरुश्च सात्विकार्यस्सद्ध्यानार्यश्च । परीक्षासु प्रथमः । वाक्यार्थे द्वितीय इति विवक्षा । कथाऽपि श्रूयते । राजगोपालपुरे न्यायामृतपरीक्षावाक्यार्थे गुर्वतिरिक्तान्

अतिशयेन विजिग्य गुरुसन्निधौ विनयेन 'अन्येषां सर्वज्ञ एव । भवतामल्पज्ञ' इति वदन् सिषेवेति । लिखितं च ग्रन्थेषु ''श्रीमत्सत्यध्यानतीर्थचरणाम्भोरुहस्मृतिः । ग्रन्थस्यैतस्य निर्मात्री केवलं लेखका वय''मित्यादि ॥ मतिमया माया स्वोत्कर्ष - स्वेतरसुजनापकर्ष-प्रवृत्तः मनसो व्यापारः । एतदुभयवर्जनमेव महन्निन्दाऽऽत्मप्रशंसावर्जनम् । इदं मानसं तपः ॥ ''तदनेन प्रकरणद्वयेन तप आख्यो भागवतो धर्मः अभिहितो भवति '' (भा.सा.पृ-११३.प-२)

**मुदा सद्यो हृद्यान्यथ च निरवद्यानि सुहृदा**
**बुधः पद्यान्यद्धा हरिभजनबद्धानि विदधत् ॥**
**गुडाकेशः श्रीशाश्रितरतिविशेषाऽसुयशसा**
**दयावान् मे देयाद्विषयविभयायेन्द्रियजयम् ॥ १८ ॥**

ಕೇಳುತ್ತಿದ್ದಂತೆ ಖುಷಿನೀಡಿ ಮನಸೂರೆಗೊಳ್ಳುವ ಸುಂದರ ಪದ್ಯಗಳನ್ನು ಶ್ರೀಹರಿಸೇವೆಗೇ ಮೀಸಲಾಗಿಟ್ಟು ಇಂದ್ರಿಯಗಳನ್ನು ಶ್ರೀಹರಿ ಭಕ್ತಿಪರಿಪಾಕದಲ್ಲಿ ತೊಡಗಿಸಿದ ಪೂಜ್ಯ ಆಚಾರ್ಯರು ಗುಡಾಕೇಶ ಎನಿಸಿದ ಆ ಅರ್ಜುನನಂತೆಯೇ ಸರಿ. ಅವರು ವಿಷಯಭಯ ತಪ್ಪುವಂತಾಗಲು ಎನಗೆ ಇಂದ್ರಿಯ ಜಯವನ್ನು ಕರುಣಿಸಲಿ.

सद्योहृद्यानि -सद्य एव श्रवणावसर एवाकर्षकाणि । अथ च निरवद्यानि -निर्दुष्टानि । हरिभजनबद्धानि पद्यानि मुदाऽद्धा सुहृदा - भक्त्या सद्यः विदधत् बुधः । गुडाकायाः ईशः । अर्जुनाभश्च । कथम् ? श्रीशे आश्रितः रतिविशेषः येषां तद्वशानां असूनाम् - इन्द्रियाणां यशसा । दयावान्- श्री आचार्यः । विषयभयनाशाय, मे इन्द्रियजयं देयात् ॥

**॥ इदं इन्द्रियजयप्रकरणम् ॥ १० ॥**

मानसं तपः इत्युक्तम् । तदर्थमिन्द्रियजयोऽप्यपेक्ष्यः । वर्णितश्चात्र आचार्येन्द्रियः । पृच्छति गुरुवर्ये न्यायामृतपरीक्षावाक्यार्थसम्प्रीते

स्वकविताचातुर्यं च, भागवतानि हि विहितानि पद्यानि भागवतोत्तमेनानेन । इन्द्रियजयलिङ्गं खल्वेतत् ॥

**अशेषं निर्दोषं विदधदुपदेशं मतिवशं**
**सुधादीनां ध्यानाभिधविबुधधेनोः करुणवान् ॥**
**सदा शास्त्रोपासाऽमृतरसपिपासाविलसितः**
**दिशेद्ब्रह्मादेशं दशविदुपदेशं सुविशदम् ॥ १९ ॥**

ಸತ್ಯಧ್ಯಾನರೆಂಬ ಕಾಮಧೇನುವಿನ ಕರುಣೆ ಇವರಲ್ಲಿ ತುಂಬಿತ್ತು. ಸುಧಾದಿಗಳ ಉಪದೇಶ ಭೋರ್ಗರೆಯಿತು. ಆ ಎಲ್ಲ ನಿಷ್ಕಳಂಕ ಜ್ಞಾನಗಂಗೆ ಇವರ ಶಿರದಲ್ಲಿ ವಶವಾಯಿತು. ನಿರಂತರ ಶಾಸ್ತ್ರಾಭ್ಯಾಸರೂಪ ಉಪಾಸನೆಯ ನೀರಡಿಕೆ ಇವರಲ್ಲಿ ವಿರಾಜಿಸಿತು. ಈ ಪೂಜ್ಯ ಆಚಾರ್ಯರು, ಶ್ರೀಹರಿ ಆದೇಶದಂತೆ ಶ್ರೀಮದಾಚಾರ್ಯರು ಉಪದೇಶಿಸಿದ ವಿಚಾರವನ್ನು ನನಗೂ ವಿಶದವಾಗುವಂತೆ ಅನುಗ್ರಹಿಸಲಿ.

अशेषम् -आवश्यकं समस्तम् । निर्दोषं सुधादीनां उपदेशं मतिवशं विदधत् । बीजमाह -ध्यानेति ॥ ध्यानः - सत्यध्यानमुनिः स एव विबुधधेनुः - कामधेनुः तस्याः । करुणवान् । करुणकारणं तु - सदा शास्त्रोपासा एव अमृतरसपिपासा तया विलसित इति । तादृशः श्रीआचार्यः । ब्रह्मणः - गुणपूर्णविष्णोः आदेशरूपम् । दशविदां - दशप्रमतीनां उपदेशं सुविशदं सत् दिशेत् ॥

## ॥ इदं ब्रह्मोपदेशप्रकरणम् ॥ ११ ॥

ब्रह्मा -भावी दशप्रमतिः । तदुपदेशः प्रार्थित इति ब्रह्मोपदेशप्रकरणम् । प्रार्थ्य-मानश्चाथात्र ब्रह्मोपदेशवान् । अतो हि देष्टुं शक्यतेऽनेन । ब्रह्म च ब्रह्ममीमांसा । नामैकदेशन्यायात् । ब्रह्ममीमांसोपदेशः सुधादीनामुपदेश एव । ध्यानकरुण-वर्णनेनोपदेशस्वरूपता कथ्यते । सदा शास्त्रोपासे-त्यधिकारनिर्णयः । इन्द्रियजयप्रकरणकथाऽनन्तरं वर्तते किलेयं कथा सम्मता । 'आरब्ध मध्वमतपाठमथो यतीन्द्र' इत्यादयः श्रूयन्ते ॥

त्यजन् गानोत्तुङ्गां त्वरकमुखभङ्गाय विहितां
प्रवृत्तिं सद्वृत्तो गुरुचरणचित्तोचितकृतिः ॥
गुरोः पादाकाशे द्युमणिसमकाशेन विहरन्
प्रवृत्ते मे कृत्ये हरतु रतिमित्येतमितवान् ॥ २० ॥

ತುರುಕರ ಮುಖಭಂಗಕ್ಕಾಗಿ ಉಂಟಾದ ಗಾಯನದ ಉನ್ನತ ಪ್ರವೃತ್ತಿಯನ್ನು ಬಿಟ್ಟರು. ಆಗಲೂ ಇವರು ಸದಾಚಾರನಿಷ್ಠರು. ಗುರುಗಳ ಮನಸ್ಸಿಗೊಪ್ಪುವ ಕೃತಿಯಲ್ಲೇ ಪ್ರವೃತ್ತಿ ಇಟ್ಟರು. ಗುರುಗಳ ಪಾದವೆಂಬ ಆಕಾಶದಲ್ಲಿ ದ್ವೈತದ್ಯುಮಣಿಯ ಪ್ರಕಾಶದಿಂದ ಸೂರ್ಯನಂತೆ ವಿಹರಿಸಿದ ದಿಟ್ಟರು. ಇಂಥಾ ಪೂಜ್ಯ ಆಚಾರ್ಯರು ಪ್ರವೃತ್ತ ಕರ್ಮದಲ್ಲಿ ಉಂಟಾಗಿರುವ ನನ್ನ ಆಸಕ್ತಿಯನ್ನು ಪರಿಹರಿಸಲಿ.

त्वरकमुखानां - त्वरकप्रमुखानां मुखभङ्गाय विहितां सङ्गीतोत्तुङ्गाम् प्रवृत्तिं त्यजन् श्रीआचार्यः ॥ सद्वृत्तः सन् गुरुचरणानां श्रीचरणानां चित्तस्य उचिता कृतिर्यस्य स सन् । गुरोः पादरूपाकाशे द्युमणेः सूर्यस्य समेन प्रकाशेन विहरन् आसीत् । एतं -एतादृश-माचार्यं प्रवृत्ते कृत्ये - कर्मणि रतिं मे हरतु इति वाञ्छया इतवान् -प्राप्तवानस्मि ॥

## ॥ इदं प्रवृत्तकर्मत्यागप्रकरणम् ॥ १२ ॥

प्रवृत्तं कर्म - इतरसुखाय प्रवृत्तिः । तत्त्याग इदानीं आवश्यक इति प्रतिपाद्यते । गुरूदितप्रकारेण हरेरुपासनार्थमेव खलु ब्रह्मोपदेशः । तत्प्रतिबन्ध-प्रवृत्तकर्मत्यागः किं नावश्यकः ? आचार्यश्च गुरुप्रसादागत-ब्रह्ममीमांसोपदेशः । स च गुरुचरणचित्तोचितकृतिः सन् सङ्गीतप्रवृत्ति-मत्यजत् । त्वरकमुखभङ्गाय विहितेति सा प्रवृत्तक्रिया । गुरुचरणनिदेशेन तत्याजेति तच्चित्तोचितकृतिः । त्यागश्च तदुदितप्रकारेण साधनायेति चित्तोचितकृतिः । न चैतादृशप्रवृत्तिसमये स दुर्वृत्तः किन्तु सद्वृत्तः । तत्प्रवृत्तिमन्तस्तथा खलु दुर्लभाः । तथाऽपि तत् त्याज्यमेवेति महतामुपदेशः । तथा कृते हि गुरुप्रसादः । ततश्चाचार्यः द्वैतद्युमणिसमानप्रकाशवान् विजहार । एवं प्रवृत्तकर्मत्याग्याचार्यः खल्वन्यान् तत्त्याजयतीति ॥

**निवृत्ते निर्वित्ते निजसुखनिमित्ते श्रुतिनुते**
**सदाश्चर्ये कार्ये हरिगुरुविचार्येव निरतः ॥**
**यदृच्छाप्तैस्तृप्तो भवभवदलिप्तो मम भवेत्**
**निवृत्ते संसक्त्यै विषयविषमुक्त्यै सुकृतये ॥ २१ ॥**

ನಿವೃತ್ತಮಾರ್ಗದಲ್ಲಿ ಐಶ್ವರ್ಯವಿಲ್ಲ .ಆದರೆ ನೈಜಸುಖಕ್ಕೆ ಕೊರತೆಯಿಲ್ಲ. ಈ ವೈದಿಕ ವೃತ್ತಿಯಲ್ಲಿದ್ದು ಅವರು ಮಾಡಿದ ಒಂದೊಂದು ಕಾರ್ಯ ಅತ್ಯಾಶ್ಚರ್ಯ. ಹರಿಗುರುಗಳ ವಿಚಾರವೇ ಅದರ ಆಂತರ್ಯ. ಯದೃಚ್ಛಾಲಾಭತೃಪ್ತ ಜೀವನದಿಂದ ಸಾಂಸಾರಿಕ ಏರುಪೇರುಗಳಿಗೆ ವಶವಾಗದವರು ಈ ಆಚಾರ್ಯರು. ಇವರಿಂದ ನನಗೂ ನಿವೃತ್ತಿಮಾರ್ಗದ ಆಸಕ್ತಿ ದೊರೆಯಲಿ. ವಿಷಯವಿಷದಿಂದ ಮುಕ್ತಿಯಾಗಲಿ. ಸತ್ಕರ್ಮದಲ್ಲಿ ಶಕ್ತಿ ಪ್ರವೃತ್ತವಾಗಲಿ.

निर्वित्ते - धनादिसम्पदसाधने, परं निजसुखस्य - स्वरूपानन्दस्य निमित्ते - आविर्भावकारणे, श्रुतिनुते - वैदिके ॥ सदा आश्चर्ये - अद्भुते लोकविलक्षणे, निवृत्ते कार्ये निवृत्तकर्मणि । हरिगुरुविचारी सन्नेव, निरतः ॥ यदृच्छया - भगवदिच्छया, प्राप्तैः पदार्थैः, तृप्तः - अलम्बुद्धिमान् । भवे -संसारे भवद्भिः - क्लेशादिभिः अलिप्तः - मनस्सङ्गरहितः । श्रीआचार्यः ॥ मम निवृत्ते कर्मणि संसक्त्यै । विषयविषात् मुक्त्यै । सुकृतये भवेत् - कारणं स्यात् ॥

**॥ इदं निवृत्तकर्मकरणप्रकरणम् ॥ १३ ॥**

निर्वित्तं कर्मैव निवृत्तम् । वित्ताद्यसाधनत्वं निर्वित्तत्वम् । उदासीनेऽनतिव्याप्तये निजसुखनिमित्तमिति लक्षणम् । नैष्फल्यशङ्कापि निवारिता । ''त्यक्त्वा स्वधर्मं '' ''तस्यैव हेतोः'' इत्यादि श्रुतिभिर्नुतमेतत् ॥ तदेतत् लोकस्य सदा आश्चर्यम् । निर्वित्तत्वात् । सतामपि आश्चर्यमेव । तदानीं निजसुखनिमित्तत्वानुभवात् । फलमुखलक्षणमेतत् । साधनविधया च रुचिरहरिगुरुविचाराविनाभूतत्वम् । ''हरौ गुरौ मयि भक्त्या '' इत्यादि श्रुतिनुतं ह्येतत् । एतादृशनिवृत्तकर्मवान् श्रीआचार्यः ।

अध्ययनाध्यापनप्रवचनग्रन्थरचनादिहरिविचारः न जातु विहितः वित्ताद्यर्थमाचार्येणेति सुप्रसिद्धमेव । न चैतावताऽकिञ्चन एव । परं यदृच्छाप्तैस्तृप्तः । ''जिहासया देहगेहात्मबुद्धेः'' इत्युक्तरीत्या भवभवदलिप्तश्च । वर्णितं चान्यत्र ''भवारतस्य तस्यापि भावं समभवत्सुखम् । सुखं हि दुःखवन्नूनमप्रयत्नेन गम्यत'' इत्यलम् ॥

**श्रितः कर्मक्षेत्रं भुवि बहुपवित्रं सुरनुतं**
**सुवीरश्रीनारायणकरुणनीरायनमणिम् ॥**
**भवाम्भोधेः पारं धरणिसुरपूरं क्रतुपुरं**
**दिशेदीशे देशं दधतमुपदेशं श्रुतिवशम् ॥ २२ ॥**

ಅವರಿದ್ದ ಕ್ಷೇತ್ರ ಕರ್ಮಕ್ಷೇತ್ರ. ಜಗದಲ್ಲಿ ಅತಿ ಪವಿತ್ರ. ಅದಕೆ ಕಾರಣ ಕರುಣಾಸಾಗರನಾದ ಶ್ರೀವೀರನಾರಾಯಣ. ಅವನು ಭವಸಾಗರಕ್ಕೆ ತೀರ. ಆದ್ದರಿಂದಲೇ ಆ ಊರೇ ನಿಜವಾಗಿ ಕ್ರತುಪುರ. ಅಲ್ಲಿ ಬ್ರಾಹ್ಮಣರ ವೃಂದ ಅಪಾರ . ಅಲ್ಲಿ ನೆಲಸಿದ್ದ ಆಚಾರ್ಯರು ನನಗೂ ಶ್ರೀಹರಿಯ ವಿಚಾರವನ್ನು ಕಿವಿಗೆ ಮುಟ್ಟಿಸುವ ಕ್ಷೇತ್ರವನ್ನು ದಯಪಾಲಿಸಲಿ.

भुवि बहुपवित्रं, सुरनुतं कर्मक्षेत्रभूतम् । वीरनारायणस्य सुकरुण एव नीरायनः समुद्रः तस्य मणिवद्विद्यमानम् । भवसागरस्य तटाकायितम् । धरणीसुरैः - ब्राह्मणैः पूरितम् । क्रतुपुरं श्रितः श्रीआचार्यः । ईशे -श्रीशे तद्विषये उपदेशं श्रुतिवशं दधतं देशं दिशेत् ॥

**॥ इदं देशप्रशंसा प्रकरणम् ॥ १४ ॥**

आचार्यदेशप्रशंसा प्रक्रियते । भूमण्डलस्य द्वीपसप्तकेऽन्यतमस्य जम्बूद्वीपस्यनववर्षेषु भारतवर्ष एव वरिष्ठ इति तादृशभारतवर्षगतं आचार्यक्षेत्रं भुवि पवित्रम् । भारतवर्षस्य श्रेष्ठत्वे बीजं कर्मक्षेत्रमिति । क्रतुपुरत्वात् पावित्र्ये बहुत्वम् । अत एव सुरनुतं च । सुरलोकापेक्षयाऽधिकमिति यावत् । ''न यत्र यज्ञेशमखा महोत्सवा सुरेशलोकोऽपि न

याति सेव्यतां'' इत्यप्युक्तम् । अथ च श्रीवीरनारायणकरुणसाधनक्षेत्रम् । अत एव पुरं श्रित आचार्यः । ''वनं गतो यद्धरिमाश्रयेत '' इतिवत् ''मय्यार्पितात्मा गृह एव तिष्ठन्नातिप्रसक्तः समुपैतिशान्तिम् '' इत्यप्युपदिष्टम् । ''संन्यस्य संयान्त्यभयं पदं हरे '' इत्युक्तरीत्या भवाम्भोधेः पारमेतत् । ''न साधवो भागवतास्तदाश्रया'' इत्यस्य व्यावृत्तिर्धरणि-सुरपूरमिति । ततश्च वनं गतोऽप्याचार्यः प्राचीनाचार्यवाचा ॥

**कलेः केलीकालीयककालितकोलोहलफलं**
**मलं लीनं हालाहलमिव समूलं कुलपतेः ॥**
**दधानेऽलं कालेऽद्भुतपदविलासेन विलसन्**
**स लातात्सत्कालं मम करुणकीलालनिलयः ॥ २३ ॥**

ಕಲಿಯ ಆಟ ಕಾಳಿಂಗನ ಅಟ್ಟಹಾಸ . ಅದರ ಫಲವೇ ಎಲ್ಲಡೆ ಕಷ್ಮಲ. ಈ ಪಾಪದ ಕಾಲಕೂಟ ಬೇರುಸಹಿತ ಹೋಗಬೇಕಾದರೆ ಶ್ರೀಹರಿಯ ನಾಮವೇ ಸಮರ್ಥ. ಕಲಿಗಾಲದಲ್ಲಿ ಇದೇ ಪರಮಾರ್ಥ. ಅದು ಇವರಲ್ಲಿ ಅರ್ಥಸಹಿತ. ಇಂಥ ಶ್ರೀ ಆಚಾರ್ಯರು ನನಗೆ ಕರುಣಾಸಮುದ್ರರಂತಾಗಿ. ಸಾಧನ ಕಾಲವನ್ನು ಕರುಣಿಸಲಿ.

कलेः, या केली सैव कालीयककलितः - कालियनामकसर्पकृतः कोलाहलः, तस्य फलं । मलं - पापादि । हालाहलमिव समूलं सत् लीनं क्षीणं सत् । कुलपतेः- श्रीनिवासस्य । अद्भुतपदविलासेन दधाने विदधाने अस्मिन् कलिकाले, तादृशाद्भुतपविलासेनालं विलसन् । सः - श्रीआचार्यः । मम करुणकीलालनिलयः सन् - कृपासमुद्रः सन् । सत्कालं लातात् - ददातु । ला दाने ॥ 'कलेः केली....' 'कुलपतेः अद्भुतपद......' इत्यत्र नित्यसापेक्षत्वात्समासः । 'केलीषु तद्गानगुणान्निपीय ' इति नैषधः । ततः केलीति । स्त्रियामपि ॥

॥ इदं कालप्रशंसाप्रकरणम् ॥ १४ ॥

दधानेऽलं काल इत्यन्तेन ''यन्नामधेयं म्रियमाण'' इत्यादिना प्रमिता प्रशंसा

सङ्गृहीता । दधानोऽलं काल इति व्यत्ययेनाचार्यस्य कालिकत्वेन प्रशंसा । कुलपतेः श्रीसत्यध्यानतीर्थस्य काल इति प्रशंसा । तदा च कलिकेलीफलं दुर्वादरूपमलं । तन्नाशसाधनं त्वाचार्यस्य कुलपतेरद्भुतपदविलासः गुरूपदेशः । अथ च कलिकेलीफलं वर्णाश्रमोचितधर्मानुष्ठानप्रतिबन्धकं लौकिकं मलम् । तद्विलीनं कुलपतेः वीरनारायणस्य अद्भुतपदे - क्रतुपुरे विगतक्रीडया दधानोपि तद्विषयकाद्भुतपदानां विशेषलासवान् । अथैवं अलौकिकं महत्स्थानसमारूढ-खलकलितकोलहलादिरूपं मलं । तदा अद्भुतः-चातुर्येणाद्भुतः यः पदविलासस्तेन प्रवचनगायनादिना लीनं दधानः । विषयस्तु कुलपतिरित्यलम् । सङ्गृहीतं चान्यत्र -

''करालेस्मिन् काले कलिकलुषजक्लेशनिलये
भवज्वालामालाहतहसिततूलाचलकुले ॥
स्वयं धर्मिष्ठोऽलं श्रितसुजनधर्मावनिरयं
परीक्षित् प्रत्यक्षः खलु खलकलिध्वंसनकरः ॥ '' इति ॥

**घनब्रह्मज्ञानाऽतनुधनधनुस्साधनतनुं**
**तुषारोद्यद्धर्षांशुगतपवशान्यर्षितपसम् ॥**
**पुनर्भावान्याविर्भवदवदनव्यासवचसं**
**श्रये कायश्रेयोविषयजयदाचाररुचये ॥ २४ ॥**

ದೃಢವಾದ ಬ್ರಹ್ಮಜ್ಞಾನವೇ ದೊಡ್ಡ ಸಂಪತ್ತು. ಈ ಐಸಿರಿಯ ಹೊರೆ ಈ ಶರೀರದ ಗುರಿ. ಅಂಥಾ ಈ ಶರೀರದಲ್ಲಿ ಚಳಿ - ಗಾಳಿ-ಮಳೆ-ಬಿಸಿಲುಗಳಿಗೆ ಬಾಗದೇ ಋಷಿಯಂತೆ ಇವರು ತಪೋನಿಷ್ಠರು. ಮೋಕ್ಷಕ್ಕೆ ದಾರಿಯಾದ ವೇದವ್ಯಾಸದೇವರ ವಚನಗಳಲ್ಲೇ ಮುಖವಿಟ್ಟರು. ಈ ಪೂಜ್ಯ ಆಚಾರ್ಯರಿಗೆ ಶರಣಾಗುವೆ. ಶರೀರದ ಸಾರ್ಥಕತೆ ಹಾಗು ವಿಷಯಗಳ ಗೆಲ್ಲುವ ಸದಾಚಾರ ತತ್ಪರತೆಯ ಬಯಸುವೆ.

घनम् - दृढं इति यावत् । यत् ब्रह्मज्ञानं तदेव अतनुधनानां - अनल्पसम्पदां धनुषः -

राशेः साधनं तनुः तस्य तादृशम् । तुषारः - शीतम् । उद्यद्वर्षा - वर्षकालः, आशुगः - वायुः । तपः - आतपः एतेषां यः वशः तदन्यत् ऋषितपः यस्य तादृशम् । पुनर्भावः - पुनर्जन्मयस्मात्तादृशः संसारः । तदन्यमोक्षस्य आविर्भवदं - आविर्भावकारणं, वदने स्थितं व्यासवचः यस्य तादृशम् । श्रीआचार्यम् ।। कायस्य यच्छ्रेयः तथा विषयविजयं च ददातीति सम्मतः यः सदाचारः तस्य रुचये, अहं, श्रये ।।

**।। इदं देहप्रशंसाप्रकरणम् ।। १६ ।।**

मानुषदेहप्रशंसा हि ब्रह्मज्ञाननिमित्ता । ''ब्रह्मावबोधधिषणं मुदमाप देव'' इति हि वर्ण्यते । तत्राप्याचार्यदेहस्य प्रशंसा घनब्रह्मज्ञानसाधनत्वेन । श्रीमदाचार्यतत्त्वोपदेशे सति हि ब्रह्मज्ञानस्य दार्ढ्यम् । तज्ज्ञानमेव धनमिति हि श्रीआचार्यो वव्रे । 'अदृष्टपूर्वेण च तेन किं ते ज्ञानं धनं वेष्टमितिह पृष्टः । ज्ञानं स वव्रे प्रणमन् ' इति हि प्रत्यपादि ।। 'विना च सदाचारं न ज्ञानं मोक्षसाधनमिति 'ऋषितपसं' इत्युक्तम् । न तु कदाचित् किन्तु सदैवेति आचार्यदेहप्रशंसा । उद्देशस्तु अपुनर्भावः मोक्षः । उक्तं च 'न चेद्यतेरन्नपुनर्भवाय' इत्यादि । 'ज्ञानक्रियाद्रव्यकलापसम्भृताः' अपीत्यपि पूर्वम् । तदेतत् पुनर्भावान्येत्यनेन वर्णितम् । 'निश्रेयसाय विषयः खलु सर्वतः स्यात्' इत्युक्तमेव प्रार्थितं कायश्रेयोविषयजयदेति । आचारमूलमिति पर्यवसानम् ।।

**शिरः पूर्वश्रीशार्ङ्गमिति सुदृशा नाकमुखरं**
**स्मरन् देवं दिव्यं हृदयनिलयं निर्लयदयम् ।।**
**अनायासान्नानाभरणभरणोद्यत्तनुतनुं**
**सदा ध्यायन् मेधासदनमपि मे धावयतु तम् ।। २५ ।।**

ಸ್ವರ್ಗಾದಿಲೋಕಗಳು ಶ್ರೀಹರಿಯ ಶಿರಸ್ಸೇ ಮೊದಲಾದ ಅಂಗಗಳೆಂದು ಚಿಂತಿಸಿ, ಹೃದಯದಲ್ಲಿ ನೆಲೆಸಿರುವ ಅನಂತಕರುಣನಾದ ಭಗವಂತನ ದಿವ್ಯರೂಪವನ್ನು, ನಾನಾ ಆಭರಣ ಅಲಂಕಾರದೊಡನೆ ಸಣ್ಣರೂಪದಲ್ಲಿ ಆಯಾಸವಿಲ್ಲದೆ ಮನಸ್ಸಿನಲ್ಲಿಡುವ ಆ

ಆಚಾರ್ಯರು ನನ್ನ ಹೃದಯಮಂದಿರಕ್ಕೂ ಆ ಭಗವಂತನನ್ನು ಬೇಗ ಕಳುಹಿಸಲಿ.

नाकमुखरं - स्वरादिकं, शिरः पूर्वं -प्रभृति यस्य तत् च तत् श्रीशस्य अङ्गमिति, सुदृशा - अन्तर्यामित्वस्वामित्वादिविधया, स्मरन् सन्, हृदयनिलयं - हृदयगुहायां निहितं, निर्लयदयम् - निर्गतः लयः यस्या सा दया यस्य तादृशम् ॥ नानाविधानां आभरणानां भरणेन उद्यन्ती तन्वी तनुः सूक्ष्मरूपं यस्य तादृशं, दिव्यं - अत्यद्भुतं, देवं -वासुदेवम् । सदा ध्यायन्, अनायासात् सदा ध्यायंश्च, श्रीआचार्यः । मे मेधारूपसदनं प्रति तं - देवं धावयतु । तद्ध्यानभाग्ययोगं मे अनुगृह्णात्विति प्रार्थना ॥

**॥ इदं ध्यानप्रकरणम् ॥ १२ ॥**

"विधीन् विधाय विधिवद्विधुवच्छुशुभेऽनघः" इत्युक्तरीत्या प्रवृत्तकर्म त्यजन्ननघ आचार्यः निवृत्तकर्म कृतवान्विधिवत् । प्राप्तौ च प्रशस्तौ देशकालौ । ततश्च हरेरुपासनमाचार्याणां वर्ण्यत इति ध्यानप्रकरणमिदम् ॥ "दध्यौ नारायणं देव" मित्युक्तं अन्यत्र ॥ तस्मिन् देवे मनोवृत्तेरवधानमेव ध्यानमुपासनं च । स च हृदयनिलयस्तनुतनुर्बिम्बाभिधः । तद्दर्शनार्थं हि प्रथमं स्थविष्टं चिन्तितमाचार्यैरिति वर्णितं शिरःपूर्वेति । "पातालमेतस्य हि पादमूलं" "भूद्वीपवर्षसरिदद्रिनभ" इति हि प्रमाणम् । "शिरो नाको नेत्रे मिहिरशशिनावम्बरमुर" इति हि आचार्यचिन्तनपारावारे विष्णुलहरी ॥ अन्तर्नियमनादिति सुदृशा स्मरन् । स्थूले जितमनस्कस्तनुतनुं ध्यायन् इति धारणा । सदेति ध्यानम् । अनायासादिति समाधिः ॥ "प्रसन्नवक्त्रं .. " "......... भूर्यनुग्रहम्" इत्यस्य सङ्ग्रहः निर्लयदयमिति । "लसन्महाहार...." "विभूषितं मेखलये"त्यादि सङ्ग्रहः नानाभरणेतीत्यलम् ॥

**वरिष्ठां वैकुण्ठस्मृतिमपि विकुण्ठामयमितः**
**सदा श्रीदारोदारपदवरदाब्जाभिधसदाः ॥**

**हरिप्रीतेर्मूर्तिर्निहतकुमतिर्वैष्णवपतिः**
**गुरौ भक्त्या मत्स्थां हरतु ममतां गोखरमिताम् ॥ २६ ॥**

ಶ್ರೀಹರಿಯ ಅಕುಂಠಿತ ಸ್ಮರಣೆಯೇ ಶ್ರೇಷ್ಠಸಾಧನ. ಶ್ರೀಹರಿಯ ವರಪ್ರದ ಉದಾರ ಪಾದಾರವಿಂದ ಒಂದೇ ಉನ್ನತ ನೆಲೆ. ಇವೆರಡನ್ನೂ ಪಡೆದ ಇವರು ಶ್ರೀಹರಿಯ ಅನುಗ್ರಹದ ಮೂರ್ತಿಯು. ಕುಮತಗಳನ್ನು ಖಂಡಿಸಿ ಇವರೇ ಆ ಕಾಲದ ವೈಷ್ಣವರಲ್ಲಿ ಅಧಿಪತಿಯು. ಈ ಪೂಜ್ಯ ಆಚಾರ್ಯರು ನನಗೆ ಗುರುಭಕ್ತಿಯನ್ನು ಕರುಣಿಸಲಿ. ಕತ್ತೇಕಿರುಬದಂತೆ ಒಳಗೆ ತುಂಬಿರುವ ಅಹಂಮಮತೆಯನ್ನು ಪರಿಹರಿಸಲಿ.

वरिष्ठाम् । विकुण्ठाम् - अकुण्ठिताम् । वैकुण्ठस्य हरेः स्मृतिमपि । श्रवणादिसमुच्चयोप्यर्थः । सदा इतः । श्रीदारस्य - हरेः उदारपदे - उत्कृष्टपादावेव वरदे ये अब्जे तदभिधं सदः यस्य सः । हरिप्रसादस्य विग्रहरूपः । मिथ्याज्ञाननाशकः । वैष्णवाग्र्यः । अयम् -श्रीआचार्यः । मत्स्थां - मयि विद्यमानां । गोखरेण - मितां उपमिताम् । ममतां । गुरौ भक्त्या हरतु ।

**॥ इदं बिम्बोपासकप्रकरणम् ॥ १८ ॥**

बिम्बोपासकलक्षणप्रवृत्तिमत आचार्यस्य हि प्रकरणमिदम् । ''त्रिभुवन-हेतुभिर्विकुण्ठस्मृतिभिरजेशसुरादिभिर्विमृग्यात् । न चलति भगवत्पदा-रविन्दाल्लवनिमिषार्धमपि स्म वैष्णवाग्र्यः ।'' ''विसृजति हृदयं न यस्य साक्षाद्धरिरवशाभिहितोऽप्यघौघनाशः । प्रणयरशनया धृताङ्घ्रिपद्मः स भवति भागवतप्रधान उक्तः'' इत्युक्तलक्षणानां ''कृष्णाङ्घ्रिपद्ममधुलिण्न पुनः ...'' इत्युक्तप्रवृत्तेश्च हरिप्रीतेर्मूर्तिरित्यन्तेन निरूपणमवधेयम् । वैष्णवपतिरित्यपि अत्रैव योज्यम् । निहतकुमतिरिति मिथ्याज्ञाननिन्दां सूचयति । ''यस्यात्मबुद्धिः कुणपे त्रिधातुके स्वधीः कलत्रादिषु भौम इज्यधीः यत्तीर्थबुद्धिः सलिले न कर्हिचिज्जनेष्वभिज्ञेषु स एव गोखरः '' इत्यनेन प्रतिपादितं मिथ्याज्ञानाकारं 'गोखरमितां ममतां' इत्यनेन सङ्गृह्य तत्परिहारः प्रार्थितः । गोखरमितामित्यत्र भावप्रधाननिर्देशः ॥

**गुरुर्भर्ता माता सुहृदथ पिता दैवतमिति**
**श्रितोऽमोघक्रीडं दृढकरुणनीडं त्वविषमम् ॥**
**अशेषेषं दुश्शासनवशपरीक्षास्वविवशः**
**परीक्षाक्षेयाक्षैधितसुकृतदीक्षां क्षिपतु मे ॥ २७ ॥**

ಗುರು-ಪತಿ-ಮಾತಾ-ಸಖ-ಪಿತಾ-ದೇವತೆ ಹೀಗೆ ಎಲ್ಲರೀತಿಯಿಂದ ಶ್ರೀಹರಿಯಲ್ಲೇ ಇವರಿಗೆ ಸೆಳೆ. ಅಮೋಘಲೀಲೆಯ ಆ ಹರಿಯು ಕರುಣೆಯ ನೆಲೆ. ಅವನಲ್ಲಿ ಇಲ್ಲ ವೈಷಮ್ಯದ ಕೊಳೆ. ಕೆಟ್ಟವರ ಕಟ್ಟಪ್ಪಣೆಗಳೆಂಬ ಹರಿ ನೀಡುವ ಪರೀಕ್ಷೆ ಬೆಂಕಿಯ ಬಾಣಲೆ ಆಗಲೂ ವಿಚಲಿತರಾಗದ ಧೀರರು ಶ್ರೀ ಆಚಾರ್ಯರು. ಅವರು ನನಗೂ ಈ ಪರೀಕ್ಷೆಗೆ ಹಾಳಾಗದ ಜ್ಞಾನ ನೀಡಲಿ. ಸದಾಚಾರ ಬೆಳಸಲಿ.

गुरुः - भर्ता - माता - सुहृत् - पिता - दैवतं इति प्रकारेण । अमोघक्रीडं - सृष्ट्याद्यमोघलीलं । दृढकरुणस्य नीडं - मन्दिरम् । अविषमम् - वैषम्यरहितं । अशेषेशं - सर्वोत्तमं श्रीहरिं श्रितः सन् । दुष्टानां शासनानां वशासु परीक्षासु अविवशः । श्री आचार्यः । मे परीक्षया अक्षेयेन अक्षेन ज्ञानेन अभिवृद्धे सुकृते दीक्षाम् । क्षिपतु । प्रेरयतु ॥

**॥ इदं अध्यात्मप्रकरणमिदम् ॥ १९ ॥**

आचार्याणां अन्तरङ्गस्य अध्यात्मप्रावण्यं वर्णयति प्रकरणमिदं अध्यात्मम् ॥ 'त्वमेव माता सुहृत्पतिः पिता त्वं सद्गुरुर्न' इत्युक्तं पितृत्वाद्यनेकविध-सम्बन्धानुसन्धानं सङ्गमयति गुरुरित्यादिनेतीत्यन्तेन ॥ ''न ब्रह्मणः स्वपरभेदमतिस्तव स्यात्'' इत्युक्तमविद्यमानत्वानुसन्धानं स्मारितम-विषममिति ॥ ''त्वयैव दत्तं पदमैन्द्रमूर्जित''मित्यादिनोक्तं कृपालुत्वानुसन्धानं सङ्गृहीतं दृढेति ॥ भागवती परीक्षा भागवतस्य दार्ढ्यं विवक्षति दुश्शासनेत्यादिना ॥ दुष्टा द्विविधा अन्तरङ्गबहिरङ्गभेदात् । वैदिकाभासलौकिकभेदाच्च द्वितीयं द्विविधम् । तेषां वशतः या परीक्षा भगवता विहिताः पूनादिपुरीष्ववमाननाद्याः स्वक्षेत्रादिषु निर्बन्धनाद्यास्तासु

भगवन्तं भागवतं कश्चनापि नानिन्ददाचार्य इत्यविवशः । ''स पण्डितस्त्वदपरं'' इत्युक्ता भगवदन्यत्र भक्तिकरणनिन्दा अशेषेषमित्यनेन सूचिता । ''स वा इदं विश्वममोघलील'' इत्यस्य सङ्ग्रहः अमोघक्रीडमिति । अन्ते च प्रकरणानुगुणप्रार्थना ॥

**चरंस्त्रिंशद्धर्मान् तदमलसुमर्माणि भगवान्**
**मुकुन्दः श्रीकुन्दः पदकधरकन्दः सकलदः ॥**
**सदा वन्द्योऽनिन्द्यो विपदि च सुहृद्योगसुगमः**
**दिशन्नेवं शिष्यान् स च मयि विशिष्यान्मतिमिमाम् ॥ २८ ॥**

ಮೂವತ್ತು ಧರ್ಮಗಳನ್ನು ಆಚರಿಸುತ್ತ, ಅದರ ಮರ್ಮವನ್ನು ಶಿಷ್ಯರಿಗೂ ತಿಳಿಸಿದವರು ಶ್ರೀ ಆಚಾರ್ಯರು. ಮುಕುಂದನೇ ಭಗವಂತ. ಶ್ರೀನಾಥ. ಸಕಲಪದಗಳೆಂಬ ನೀರಿಗೆ ಆಧಾರ . ಜಗತ್ತಿಗೆ ಅದನ್ನು ನೀಡುವ ಉದಾರ. ಅವನೇ ಸದಾ ವಂದನೆಗೆ ಅರ್ಹ. ವಿಪತ್ತಿನಲ್ಲೂ ಅವನ ನಿಂದೆ ಸಲ್ಲದು. ಅವನೇ ಅನಿಮಿತ್ತಬಂಧು. ಭಕ್ತಿಗೆ ಮಾತ್ರ ವಶನು. ಹೀಗೆ ಶಿಷ್ಯರಿಗೆ ಉಪದೇಶಿಸಿದ ಆ ಆಚಾರ್ಯರು ನನಗೂ ಈ ಜ್ಞಾನವನ್ನು ಕರುಣಿಸಲಿ.

त्रिंशत्संख्याकान् भागवतधर्मान् । चरन् - आचरन् सन् । भगवान् - षड्गुणैश्वर्यपूर्णः परमात्मा श्रीहरिः । मुकुन्दः - मोक्षदाता । श्रीकुन्दः - श्रीनिधिः श्रीश इति यावत् । पदरूपाणां कानां - जलानां धरः कन्दः मेघः । सकलशब्दवाच्य इत्यर्थः । सकलदः । सदावन्द्यः । विपद्यपि अनिन्द्यः । सुहृत् - अनिमित्तोपकारी । योगेन - भक्त्याख्येन सुगमः - प्राप्तुं शक्यः । एवं तदमलसुमर्माणि - भागवतधर्मरहस्यं शिष्यान् प्रति । दिशन् - उपदिशन् आचार्यः । इमां मतिं मयि अपि विशिष्यात् ॥

**॥ इदं धर्मोपदेशप्रकरणमिदम् ॥ २० ॥**

भागवत धर्माचरणपूर्वकं उपदेशः धर्मोपदेशः । तदाचार्यीयमत्र वर्ण्यत इतीदं धर्मोपदेशप्रकरणम् ॥ त्रिंशद्धर्मा इति नाम्ना ''सत्यं दया तपः शौचं.. '' इत्याद्युक्तभागवतधर्मसङ्ग्रहः । धर्माणां भागवतत्वं वक्ति भगवानिति । भगवच्छब्दार्थः मुकुन्द इति । ''सेशं पुनात्यन्यतमो मुकुन्दात्को नाम लोके

भगवत्पदार्थ'' इत्युक्तम्। सकलसम्पत्समन्वयः श्रीकुन्द इति। ''शब्दस्य हि ब्रह्मण एष पन्था'' इत्यस्य सङ्ग्रहः पदकधरेति। सकलद इति सकलत्र हरेरेव स्वतन्त्रकर्तृत्वानुसन्धानं सूचयति। ''यत्पादकञ्जरजः शिरसा बिभर्ति श्रीरब्जजश्च गिरिशः'' इत्याद्युक्तम्। ''न यस्य सख्यं पुरुषो वेत्ती''त्युक्तं वन्दनं सङ्गृह्णाति। सदा वन्द्य इति। विपदि च अनिन्द्य इति ''स चिन्तयन् द्व्यक्षरमेकदाम्भसी''त्युक्तस्य सङ्ग्रहः। ''विश्वस्य यः स्थितिलयो-द्भव''इत्युक्तं निर्निमित्तोपकारित्वं वक्ति सुहृदिति। भगवान् भागवतधर्मश्च भक्तिमात्रसुगम इति अन्ते वर्णितम्। ''भक्त्या भागवतं ....... न व्युत्पत्त्ये''ति व्यक्तमेव॥

**मनश्शुद्धिक्लेशोद्धतिविरतिवीशातिरतिधी-**
**प्रदोपासोद्भावाद्धृदिगवसुदेवात्मजपदम्॥**
**त्र्यवस्थेन्द्रं जीवेन्द्रियहृदयजीवप्रदहृदं**
**भजन् बिम्बं डिम्भं कुरु गुरुपदम्भोजरजसम्॥ २९॥**

ಮನಃಶುದ್ಧಿ ಅದರಿಂದ ಕ್ಲೇಶನಿವೃತ್ತಿ ನಂತರ ವೈರಾಗ್ಯ ಹರಿಭಕ್ತಿ ವಿಜ್ಞಾನಗಳ ಅಭಿವೃದ್ಧಿಗಳನ್ನು ನೀಡುವ ಉಪಾಸನೆ ಇವರಲ್ಲಿ ಉದಯವಾಗಿತ್ತು. ಹೃದಯದಲ್ಲಿದ್ದು ಜೀವನ ಇಂದ್ರಿಯ ಹೃದಯಾದಿಗಳಿಗೆ ಉಜ್ಜೀವನ ನೀಡುವ, ಸೃಷ್ಟಿ-ಸ್ಥಿತಿ-ಲಯ; ಜಾಗೃತ್-ಸ್ವಪ್ನ-ಸುಷುಪ್ತಿ ಮೂರೂ ಸ್ಥಿತಿಯಲ್ಲಿ ನಿಯಾಮಕನಾದ ಆ ವಾಸುದೇವರೂಪಿ ಶ್ರೀಹರಿಯನ್ನು ಆಚಾರ್ಯರು ಸೇವಿಸುತ್ತಿದ್ದರು. ಆ ಪೂಜ್ಯರು ಈ ಕೊನೆಗೂ ಗುರುಪಾದಧೂಳಿ ಸಿಗುವಂತೆ ಅನುಗ್ರಹಿಸಲಿ.

मनश्शुद्ध्या क्लेशस्य उद्धतिः - उद्धारः। तां तथा विरतिः वैराग्यं, वीशतिरतिं - भगवत्युद्रिक्तभक्तिम्, भगवतः धीः - प्रबोधः तां च॥ प्रदः - प्रददाति य उपासः = उपासना तस्य उद्भावात् = उद्भव एव तस्मात्। आरम्भादिति यावत्। हृदिगं वसुदेवात्मजनामकं वासुदेवं। तिस्रः अवस्थास्तासु नियामकम्। जीवस्य इन्द्रिय-हृदयानां उज्जीवनदाने कृतादरं। बिम्बं भजन् आचार्यः, डिम्भं मां, गुरूणां महतां

पदम्भोजस्य रजोरूपं कुर्विति प्रार्थना ॥

**॥ इदं बिम्बोपदेशप्रकरणम् ॥ २१ ॥**

बिम्बोपासनाविषयबिम्बवर्णनं बिम्बोपदेशः । तद्बिम्बभक्ताचार्यवर्णनं च बिम्बोपदेशप्रकरण् । बिम्बोपासना च मनश्शुद्धीत्यारभ्य प्रदेत्यन्तं वर्णिता । ''नात्यन्तशुद्धिं लभतेन्तरात्मा यथा हृदिस्थे भगवत्यनन्ते'' ''तावन्ममेत्यसदवग्रह आर्तिमूलं यावन्न तेङ्घ्रिमभयं प्रवृणीत लोकः'' ''इत्यच्युताङ्घ्रिं भजतोऽनुवृत्त्या भक्तिर्विरक्तिर्भगवत्प्रबोधः'' इत्युक्तमेतत् । बिम्बवर्णनमन्यत् । ''यद्वासुदेवं कवयो वदन्ति'' ''प्रत्यक्'' इत्यस्य वर्णनं हृदीत्यादिना । ''यस्स्वप्नजागरसुषुप्तिषु सन् बहिश्च'' इत्यादि सङ्ग्रहस्त-दुत्तरत्र । ''विना महत्पादरजोऽभिषेकात्'' इत्यनुगुणतया प्रार्थना ॥

**सतीं पुत्रं छत्रं सुकृतमथ गात्रं स्वयमयं**
**समर्प्येशायेष्टाखिलमलमधिष्ठानविधया ॥**
**भजन् सर्वान् गुर्वाद्यमरपरिवारान् गुरुवरः**
**समस्मिन् मे कृष्णार्पणसुधिषणामाशुदिशतु ॥ ३० ॥**

ಹೆಂಡತಿ-ಮಕ್ಕಳು-ಮನೆ-ಸತ್ಕರ್ಮ-ಶರೀರ-ಜೀವ ಇತ್ಯಾದಿ ಇಷ್ಟವಾದ ಎಲ್ಲವನ್ನೂ ಶ್ರೀಹರಿಗೆ ಅರ್ಪಿಸಿ, ಹರಿಯ ಅಧಿಷ್ಠಾನವೆಂದು ಸಕಲ ಗುರು-ದೇವತಾದಿಗಳನ್ನು ಭಜಿಸಿದ ಈ ಪೂಜ್ಯ ಗುರುವರ್ಯರು ಎಲ್ಲೆಡೆ ಶ್ರೀಕೃಷ್ಣಾರ್ಪಣ ಬುದ್ಧಿ ನನಗೂ ಬರುವಂತೆ ಅನುಗ್ರಹಿಸಲಿ.

सतीं पुत्रं छत्रं - गृहम्, सुकृतं - सत्कर्म, गात्रं - वपुः, स्वयं - स्वं च । इष्टाखिलं अलं = सम्यक् ईशाय समर्प्य । अधिष्ठानरीत्या । सर्वान् गुर्वाद्यमरपरिवारान् भजन् अयं गुरुवरः । मे समस्मिन् सर्वत्र, कृष्णार्पणसुधिषणां = वासुदेवार्पणमतिं दिशतु ॥

**॥ इदं आत्मसमर्पणप्रकरणम् ॥ २२ ॥**

आत्मसमर्पणमेव बिम्बोपासना । आत्मनो जीवस्य समर्पणोक्ति ''स्वय''मिति । अतीतस्य समर्पणमथ द्वितीयम् । तत्रेष्टद्रव्यसमर्पणकथनं

''सती''मित्यादिना । क्रियासमर्पणं 'सुकृत'मिति । गुणाद्यखिलार्पणसङ्ग्रहो भवती''ष्टाखिल''मिति कथया । आत्मसमर्पणकारणं बाह्योपासना निरूपिता 'अधिष्ठाने'त्यादिना तथा चोचिता प्रार्थना चान्ततः ॥ प्रथितं चाचार्योपासनदर्शिनां यथा ''सतीं पुत्रान् पुत्रीं धनकनकगेहान् नरहरे तवाङ्घ्र्यम्भोजेऽहं वपुरिदमसून् जातु कलये'' इत्यादि ॥

**पुनाना लोकानां जनयजनदानाञ्जनधना-**
**ऽनधीनश्रीशानस्ववनजननान्मोचनचणा ॥**
**ततव्यक्तिर्भक्तिर्विविधपदशक्तिप्रतिभया**
**ऽलसद्यस्मिन् स स्याद्धरिसुरतिसस्यातिरसदः ॥ ३१ ॥**

ಜನಬಲ-ಯಜ್ಞ-ದಾನ-ಐಶ್ವರ್ಯ-ಧನಾದಿಗಳಿಗೆ ಶ್ರೀಹರಿಯ ಪ್ರೀತಿ ಸಿಗುವುದಿಲ್ಲ. ಅದು ಭಕ್ತಿಯಿಂದ ಮಾತ್ರ ಸಾಧ್ಯ - ಆ ಭಕ್ತಿ ಲೋಕಪಾವನಿ. ಮುಕ್ತಿಸಾಧನಿ. ಹಂತಹಂತಗಳಲ್ಲಿ ವ್ಯಕ್ತವಾಗುವ ಆ ಭಕ್ತಿ ಇವರಲ್ಲಿ ವಿವಿಧ ಸ್ತೋತ್ರರಚನೆಯ ಶಕ್ತಿ ಪ್ರತಿಭೆಗಳಿಂದ ವಿರಾಜಿಸುತ್ತಿತ್ತು. ಇಂಥಾ ಆಚಾರ್ಯರು ನನ್ನ ಹರಿಭಕ್ತಿಯ ಹಣ್ಣನ್ನೂ ರಸವತ್ತಾಗಿಸಲಿ.

लोकानां पुनाना, जनस्य यजनस्य दानस्य अञ्जनस्य - दिग्गजस्य (वाहनोपलक्षकमेतत्) धनस्य चेत्येतेषां । अनधीनं यत् श्रीशानस्य सु- अवनम् - सुप्रेम, तस्य जननात् - आविर्भावतः, मोचनं - मुक्तिः तत्र चणा निपुणा । ततव्यक्तिः -विस्तृतप्राकट्यवती, विविधाः - शास्त्रीय साहित्यक - दास्यादिविधया विविधाः या पदशक्तयः तासां प्रतिभया । यस्मिन् अलसत् । स आचार्यः हरिसुरतिरूपस्य फलस्य अतिरसदः स्यादिति ॥

॥ इदं भक्तिस्तुतिप्रकरणम् ॥ २३ ॥

आचार्यीया प्रसज्यते । ''मद्भक्तियुक्तो भुवनं पुनाती''त्यादेः पुनानेत्यादि । ''मन्ये धनाभिजने''त्यादेर्धनानधीनेति । मोचनचणेति ''य उत्तरानन-यत्कोसलान् दिवम्'' इत्युक्तेः ।

''विद्या-विद्याप्रदान -प्रवचन-कविता-घोरवाक्यार्थचर्चा-
वादप्रौढप्रबन्धप्रणयन- हरिसद्दासवाग्गानरूपः ।
नानाकारो विचारः परतिमिरहरः धीरमाध्वोक्तिचारः
भक्त्या फल्यप्ययं तद्धरिगुरुचरणाम्भोजभक्तेः फलं हि ॥''
इत्युक्तमेवोक्तं विविधपदशक्तिप्रतिभयेति ॥

**द्रुतं चित्तं नेत्रं सरसमथ वक्त्रं विकसितं**
**वपू रोमाञ्चेतं विदितमुदितं गद्गदयुतम् ॥**
**सुनृणां श्रोतॄणामजनि यदुपन्यासभजनात्**
**विलज्जं गायन्तं स हरिचरितं माञ्च कुरुतात् ॥ ३२ ॥**

ಹೃದಯ ಕರಗಿತು. ಕಣ್ಣು ಒದ್ದೆಯಾಯಿತು. ಮುಖ ಅರಳಿತು. ಮೈ ಪುಳಕಿತವಾಯಿತು. ಗೊತ್ತಿದ್ದ ಮಾತುಗಳೇ ಗದ್ಗದಿತವಾಯಿತು. ಅವರ ಉಪನ್ಯಾಸಕೇಳಿದ ಸಜ್ಜನರಿಗೇ ಹೀಗಾಯಿತು. (ಇನ್ನು ಅವರೆಂಥವರು !) ಆ ಪೂಜ್ಯ ಆಚಾರ್ಯರು ಶ್ರೀಹರಿಚರಿತೆಯನ್ನು ನಾಚಿಕೆಯಿಲ್ಲದೆ ಹಾಡುವಂತೆ ನನ್ನನ್ನು ಪ್ರೇರೇಪಿಸಲಿ.

सुनृणां -सात्विकानाम् । आचार्यस्य उपन्यासः तस्य भजनात् । हरिचरितं विलज्जं गायन्तं मां कुरुतात् । स आचार्यः ॥

**॥ इदं भक्तिकार्यप्रकरणम् ॥ २४ ॥**

भक्तिज्ञापकं हीदम् । श्रोतृभक्तिर्हि वक्तृभक्तिं ज्ञापयति । प्रवक्ता हि आचार्यः । नृणां अपक्वा । सुनृणां पक्वकल्पा । पक्वा च प्रवक्तुरिति हि व्यवस्था ।
''आर्यस्येदृशसुन्दरप्रवचसो माहात्म्यमत्यद्भुतं
नूनं तद्धरिभक्तिमात्रसुफलं पाण्डित्यतो नोत्थितम् ॥
स्वस्मिन् यस्य च नास्ति भक्तिरजिते किं शक्नुतेऽयं नरः
स्वान्येषां हरिभक्तिदप्रवचनं कर्तुं धरित्र्यामहो ॥''इत्यन्यत्रोक्तमित्यलम् ॥

**श्रिया भूत्या भृत्यासनधनबलत्यागमतिभिः**
**गुरुस्थानस्थानागतदुरभिमानान्धधिषणान् ॥**
**तिरस्कुर्वन् गुर्वन्तरगहरिसेषिन् त्वयि गुरो**
**विपर्यस्ता मास्तां सुमतिरपि मत्स्था क्वचिदपि ॥ ३३ ॥**

ತೇಜಸ್ಸು - ಸಂಪತ್ತು-ಆಳುಕಾಳು-ಪೀಠ-ಹಣ-ಬಲ-ದಾನ-ವಿದ್ಯೆ ಇವುಗಳಿಂದ ಗುರುಸ್ಥಾನದಲ್ಲಿದ್ದಾಗ ದುರಭಿಮಾನ ಕುರುಡು ಹೊಂದಿದ ಮಂದಿಯನ್ನು ಆಚಾರ್ಯರು ಪುರಸ್ಕರಿಸಲಿಲ್ಲ. ಗುರ್ವಂತರ್ಗತ ಶ್ರೀಹರಿಗೆ ಪುರಸ್ಕರಿಸುವುದನ್ನು ತಪ್ಪಿಸಲಿಲ್ಲ. ಇಂಥಾ ಓ ಗುರುವೇ ! ನಿಮ್ಮ ಬಗ್ಗೆ ನನ್ನಲ್ಲಿರುವ ಈ ಸನ್ಮತಿ ಎಂದೆಂದೂ ವ್ಯತ್ಯಸ್ತವಾಗದಿರಲಿ.

श्रिया -शरीरकान्त्या । त्यागो - दानाभासः । मतिः - पाण्डित्यम् । गुरुस्थानस्थान् आगतादुरभिमानेन अन्धधिषणा यैस्तान् । अत एव तान् तिरस्कुर्वन् ॥

**॥ इदं अन्यथामत्यकरणप्रकरणम् ॥ २५ ॥**

अन्यथामतिर्हि सहजा । तत्राप्यलौकिके । आचार्यालौकिकता तु तिरस्कृत्या । अलौकिकतायां महत्ता तु अन्यथामत्यकरणबीजम् । हरिसेवयोक्तं महत्वम् । ''गुहाशयायैव न देहमानिन'' इत्यादेः । प्रकरणसङ्ग्रहः स्फुटः ॥

**सदा हृत्प्रासादाखिलफलदसाधारणगुरु-**
**प्रवृत्तं सच्छास्त्रं सुकृतिततिसच्छात्रनिचयैः ॥**
**भजन् वेदैर्वादैर्विदलितविवादैः परवधैः**
**गुरुः श्रद्धां माध्वीं सुखदपदवीमेधयतु मे ॥ ३४ ॥**

ಸದಾ ಹೃದಯ ಮಂದಿರದಲ್ಲಿದ್ದು ಎಲ್ಲರಿಗೂ ವರದರಾಗಿ ಸಾಧಾರಣಗುರುಗಳೆಂದು ಹರಿವಾಯುಗಳು ನಿರ್ದಿಷ್ಟರಾಗಿದ್ದಾರೆ. ಅವರ ಉಪದೇಶಗಳಾದ ಸಚ್ಛಾಸ್ತ್ರಗಳನ್ನು ಗ್ರಂಥನಿರ್ಮಾಣ -ಶಿಷ್ಯಸಂತಾನ ಪಾಠಪ್ರವಚನ- ಪರವಾದಿಭಂಜಕ ವೇದವಾದ ವಿನೋದನ ರೂಪ ಸೇವೆಗಳಿಂದ ಆದರಿಸಿದವರು ಶ್ರೀ ಆಚಾರ್ಯರು. ಅವರು ಸುಖದ ಸೋಪಾನವಾದ ಈ ಮಾಧ್ವಶ್ರದ್ಧೆಯನ್ನು ನಿರಂತರ ಬೆಳೆಸಲಿ.

हृदेव प्रासादः - मन्दिरविशेषः प्रसन्नतानिमित्तभूतो वा । तत्र अखिलसाधकानां फलप्रदौ साधारणगुरुपदाभिधेयौ चैत्यवपुषौ ऋजूत्तम-पुरुषोत्तमौ ताभ्यां प्रवृत्तम् । सुखदपदवीं माध्वीं श्रद्धां एधयतु - वर्धयतु ॥

॥ इदं गुरुविचारप्रकरणम् ॥ २६ ॥

साधारणगुरुविचारो हि प्रक्रान्तः । विश्वगुरुसेवयाचार्यस्यात्र प्रस्तावः । ''कृतमृद्धमुदः स्मरन्तः'' इत्युक्तमेवात्र प्रपञ्चितम् । अत एव सुखदपदवीमिति प्रार्थ्यतेऽन्ते । आचार्यानन्दोद्रेक एवं विध इति वा ॥

**कुलस्वामी प्रेमी नयनपथगामी भवतु नः**
**स्तुवन्नेवं देवं भवकुवनदावं कुलधवम् ॥**
**सदध्यक्षो मोक्षोदयतदपरोक्षोल्लसितदृक्**
**करोत्वन्ते धीरो भगवदपरोक्षं मम वशम् ॥ ३५ ॥**

कुलधवं -कुलपतिम् । सदध्यक्षः सतामधिपतिः । मोक्षस्य उदयः - सामीप्यं यस्मात् तस्यापरोक्षेनोल्लसिता, तेन तदपरोक्षेनोल्लसिता वा दृक् ज्ञानभाः यस्यासौ । अन्ते - सामर्थ्यान्ते ॥

"ಕುಲಸ್ವಾಮೀ ಪ್ರೇಮೀ ನಯನಪಥಗಾಮೀ (ಕಂಗಳ ಹಾದಿಗೆ ಸಿಗುವನು ) ಭವತು ನಃ (ನಮಗಾಗಲಿ)"ಎಂದು, ಸಂಸಾರದ ಕಾಡಿಗೆ ಕಾಳ್ಗಿಚ್ಚಾದ ಕುಲದೇವರನ್ನು ಸ್ತುತಿಸಿದರು ಇವರು. ಆದ್ದರಿಂದ ಸಜ್ಜನರಲ್ಲಿ ಶ್ರೇಷ್ಠರು. ಮುಕ್ತಿನೀಡುವ ಆ ಸ್ವಾಮಿಯ ಅಪರೋಕ್ಷದಿಂದ ಕಂಗಳ ಅರಳಿಸಿದವರು. ಈ ಪೂಜ್ಯ ಆಚಾರ್ಯರು ನನಗೂ ಕೊನೆಯಲ್ಲಿ ಶ್ರೀಹರಿಯ ಅಪರೋಕ್ಷ ಸಿಗುವಂತೆ ಅನುಗ್ರಹಿಸಲಿ.

॥ इदं अपरोक्षप्रकरणम् ॥ २७ ॥

आचार्यापरोक्षः प्रस्तूयते । ''कुलस्वामी प्रेमी नयनपथगामी भवतु नः'' इत्याचार्योक्तिरेव । 'गुणेषु योनिष्विह जातवेदस'मिति दृष्टान्तानुरूप्यं दावेति । ''आयान्तं वेङ्कटेशं तिरुपतिपुरतो वीक्षमाणस्तुवानः'' इत्यादि-

कथानुसन्धेया । आचार्यशिष्येण केनचिल्लिखितमाचार्यरचितकन्नडपद्यमेकं अपरोक्षकालीनमिति भाति । तदप्यत्रावश्यमुल्लेखनीयम् ।। तथाहि-

ಬಂದ ತಿರುಪತಿಯಿಂದಲಿ ತಿಮ್ಮಪ್ಪನು ಬಂದ ॥ ಪ ॥
ಬಂದ ಸುಂದರ ಕುಂದಣಕನಕ ಕಾಲಗೆಜ್ಜೆಯ ಧಿಮಿಧಿಮಿಸುತಲಿ ।
ಮಂದಹಾಸದಿಂದ ಸುಂದರ ಬೆಳಕನು ಬೀರುತಲಿ ॥
ಚಂದ್ರಸೂರ್ಯರಂತ ಪೊಳೆವ ಕಾಂತಿಕಿರೀಟವ ತೋರುತಲಿ
ಸುಂದರ ಪೀತಾಂಬರವನು ಕೈಯಲಿ ತೀಡುತ ಆನಂದದಿಂದ ಕುಣಿಯುತ ॥ 1 ॥
ಸರಿರಾತ್ರಿಯೊಳು ಬಾಗಿಲ ತೆರೆಯೆಂದೆನುತಲಿ
ಸರಿರಾತ್ರಿ ಇದೆಂದರೆ, ಚಂದ್ರಸೂರ್ಯ ಬೆಳಕನು ತೋರುತಲಿ ॥
ಸರಸರ ಕೇಳದೆ ಬಾಗಿಲ ತೆರೆಯುತ ನನ್ನ ಮನೆಗೆ
ಪರಮೇಶ್ವರ ಬಂದ ಕುಣಿಯುತ ಬಂದ ತಿಮ್ಮಪ್ಪ ಬಂದ ॥ 2 ॥
ಎಡಬಲದಲಿ ಮಡದಿಯರಿಂದಾ ಒಡಗೂಡಿ
ಮೃಡವಿಧಿಮುಖಸುರಪರಿವಾರವೆಲ್ಲ ಒಡಗೂಡಿ ॥
ಕಡು ಕರುಣಾಳು **ಹಯವದನವ್ಯಾ**ಸನು ಮುಖವ ತೋರುತಲಿ
ಭಡಭಡ ಬಂದ ಗಡಿಬಿಡಿಯಿಂದ ಬಾಗಿಲ ತೆಗೆದಾವ ನನ್ನ ಮನೆಗೆ ಗೋವಿಂದ ॥3॥

**समानश्चामानो भगवति मनोमानसमयं**
**समर्प्य श्रीकृष्णोऽगणितसुगुणे निर्गुणकणे ।।**
**गुणाभ्यां निर्वृत्तो दशहृदिनवृत्तो गुणवृतो**
**दिशेन्मे मतोक्तिक्षतिगुणनिवृत्तिप्रदगुणान् ।। ३६ ।।**

ಅನೇಕ ಸಮ್ಮಾನವಿದ್ದರೂ ಪ್ರಮಾಣ ವೈಭವವಿದ್ದರೂ ಇವರಿಗೆ ಅಭಿಮಾನವಿಲ್ಲ. ಅಗಣಿತ ಗುಣಶಾಲಿ ತ್ರಿಗುಣಾತೀತ ಶ್ರೀಹರಿಗೆ ವಿಷಯೇಂದ್ರಿಯ ದ್ವಂದ್ವ ಅರ್ಪಿಸಿದವರು. ನಿರ್ಗುಣನಾದ ಶ್ರೀಹರಿನಿಷ್ಠರಾಗಿ ಗುಣನಿವೃತ್ತಿ ಪಡೆದವರಂತಾದವರು. ಮಧ್ವಪತಿಯ ದಾಸರು. ಶಿಷ್ಯರ ನಡುವೆ ವಿರಾಜಿಸಿದವರು. ಈ ಪೂಜ್ಯ ಆಚಾರ್ಯರು ನನಗೂ ಕೂಡ ಉನ್ಮತ್ತರ ಮಾತು ಸೀಳುವ ಶಕ್ತಿಯ ಜೊತೆ ಗುಣನಿವೃತ್ತಿ ತರುವ ಗುಣ ನೀಡಲಿ.

समानः - प्रमाणसहितः । अत एव सम्मानसहितः । तथापि अमानः -अभिमानरहितः ।

अयमाचार्यः । मनः, मानसं - विषयादिकं चेत्युभयम् । प्राकृतलेशहीन इति निर्गुण-कणः । गुणाभ्यां - मनोमानसाभ्यां निर्वृत्त इति निर्गुणाख्योऽयं साधकः । दशहृत् - दशप्रमतिः । तद्दिने तत्स्वामिनि निष्ठः । तत एव गुणवृतः - श्रीमद्विष्ण्वङ्घ्रिनिष्ठातिगुणवृतः गुणैः -शिष्यैः परिवृतो गुरुतम इति । मत्तानामुक्तेः क्षति प्रदान् गुणनिवृत्तिप्रदान् गुणान् ॥

**॥ इदं गुणनिवृत्तिप्रकरणम् ॥ २७ ॥**

गुणनिवृत्तिः प्रार्थितेति सङ्गतिः । ''अविद्यमानो ह्यवभाति हि द्वयः'' इत्युक्तं तु मनोमानसमिति द्वयम् । सङ्कल्पविकल्पमनोनिरोधाद्गुणाभ्यां निर्वृत्त इति वा । दशहृद्दिनवृत्त इति बुधशब्दार्थः । अन्यत्स्पष्टमेव ॥

**गुणश्रीर्हासश्रीश्चतुरवचनश्रीश्च कविता-**
**रविश्रीर्गानश्रीस्समसमयमाश्रीर्निवसति ॥**
**सुधाश्रीर्यत्र श्रीपतिरतिमतिश्रीरिति सता**
**प्रशस्यं नामास्य प्रविशतुममास्यं प्रथमतः ॥ ३७ ॥**

ಗುಣಸಿರಿ. ನಗೆಯ ಸಿರಿ. ಚಾತುರ್ಯದ ಮಾತಿನ ಸಿರಿ. ಕವಿತೆಯ ಪ್ರತಿಭಾ ಸಿರಿ. ಗಾಯನ ಸಿರಿ. ಸಕಲ ಶಾಸ್ತ್ರದ ಜ್ಞಾನ ಸಿರಿ. ನ್ಯಾಯಸುಧೆಯ ಸಿರಿ. ಶ್ರೀಹರಿಯಲ್ಲಿ ಜ್ಞಾನ ಭಕ್ತಿಯ ಐಸಿರಿ ಅವರಲ್ಲಿ ನೆಲೆಸಿತ್ತೆಂದು 'ಶ್ರೀನಿವಾಸ' ಎಂಬ ಮಾತಿನಿಂದ ಅವರು ಸ್ತುತ್ಯರು. ಅವರ ಈ ಹೆಸರು ನನ್ನ ಮುಖದಲ್ಲಿ ನಲಿದಾಡುವ ಸಾಧನೆ ಮೊದಲು ಸಿಗಲಿ.

गुणसम्पत् । मन्दहासः । वाक्चातुर्यम् । कविताप्रतिभा । सङ्गीतविद्या । सकल-शास्त्रपाण्डित्यम् । श्रीमन्न्यायसुधाविभूतिः । भगवद्भक्तिः विज्ञानं च । यत्र निवसति तस्यास्य श्रीनिवास इति सत्प्रशस्यं नाम प्रथमतः प्रविशत्वास्यमिति प्रार्थना ।

**॥ इदं नामप्रशंसाप्रकरणम् ॥ २९ ॥**

आचार्यनामप्रशंसा हि भगवत्येव पर्यवसितेति सङ्गतिः अशक्ताधिकारिणामियं हि प्राथम्यं भजते । अतः प्रथमत इति ।

''मातृमोदकरहासरसश्रीर्यत्र तातसुखदायिगुणश्रीः ।

प्रीतलोकचतुरत्ववचः श्रीः श्रीनिवासपदमस्य हि सार्थम् ।।
व्याप्तदिग्जितरविः कविताश्रीः दासवर्यपदगानरसश्रीः
यत्रतर्कवनराजनदश्रीः श्रीनिवासपदमस्य हि सार्थम् ।।
शाब्दभूषणविभूषितवाच्छ्रीस्तुष्टसद्बिबुधशास्त्रसुधाश्रीः ।
यत्र विष्णुपदभक्तिमतिश्रीः श्रीनिवासपदमस्य हि सार्थम् ।।''
इत्याद्यन्यत्र प्राथम्येनोक्तमेवात्र सङ्गृहीतम् ।।

**रमाश्लिष्टादिष्टस्तदमलहृदिष्टः कृतिनटः**
**पटुः कृष्टिश्रेष्ठः कवनधनकोष्ठः सुरकुटः ।**
**अटव्यट्टः स्पष्टस्स्फुटहृदथ तत्प्रेष्ठभटराट्**
**पित शिष्टः शिष्टः स्वकृतिपरितुष्टः स्फुटतु मे ।। ३७ ।।**

ರಮಾಪತಿಯಿಂದ ಆಜ್ಞಪ್ತರಾದ ಶ್ರೀಮದಾಚಾರ್ಯರು, ಅವರ ಹೃದಯಕ್ಕೆ ಅತಿಪ್ರಿಯರಾದ ಟೀಕಾಚಾರ್ಯರು, ಕೃತಿಯಿಂದ ತಾಂಡವ ಮಾಡಿದ ವ್ಯಾಸರಾಜರು, ಪಟುಗಳಾದ ರಘೂತ್ತಮರು, ಕವಿತಾಸಂಪತ್ತಿಗೆ ನಿಧಿಯಾದ ಶ್ರೀವಾದಿರಾಜರು, ಕಲ್ಪತರು ಎನಿಸಿದ ಮಂತ್ರಾಲಯರಾಯರು, ಅಡವೀ ಸ್ವಾಮಿಗಳು, ಅಭಿನವ ಆನಂದತೀರ್ಥರು, ಅವರ ಪ್ರಿಯಸೇನಾನಿಯಾದ ಶ್ರೀಪೂಜ್ಯಜಾಲಿಹಾಳಾಚಾರ್ಯರು, ಇನ್ನುಳಿದ ಶಿಷ್ಟರಾದ ಪೂಜ್ಯತಂದೆಯವರು ಈ ನನ್ನ ಕೃತಿಯಿಂದ ಸಂತುಷ್ಟರಾಗಲಿ.

रमाश्लिष्टेन - भगवता आदिष्टः भगवत्पादाचार्यः । तदमलहृदः इष्टः - टीकाचार्यः । कृतिज्ञाप्यनटत्ववान् - तर्कताण्डवप्रणेता व्यासराजार्यः । पटुः - वटुत्वेपि पटुत्ववानिति रघूत्तमगुरुवर्यः । कृष्टीनां - विदुषां वादिनामिति यावत् श्रेष्ठः - राजा वादिराजः । स च कविताप्रपञ्चे विशेषतः स्मर्तव्य इति कवनधनकोष्ठ इत्युक्तिः । अथवा प्रतिपद-रचितानेकरत्नाभिषेकः श्रीसुधीन्द्रयतिवरो विवक्षणीयः । सुरकुटः - सुरतरुः श्रीराघवेन्द्रयतिसार्वभौमः । अटवी एव अट्टः स्थानविशेष इति यावत् यस्य तादृशः आरण्यकाचार्यः । स्पष्टः - आचार्यसक्षात्कृतः अस्माकमपि चित्रदृष्ट्या स्पष्टो वा स्फुटहृत् - विस्तृतान्तरः अभिनवानन्दतीर्थः । तत्प्रेष्ठभटराट् - सेनानीः

जालिहाळाचार्यः । शिष्टः शिष्टः पिता । स्वकृतेन परितुष्टः सन् । मे - मदर्थम् स्फुटतु - विकसतु प्रसीदत्विति यावत् ॥

॥ इदं गुरुदक्षिणाप्रकरणम् ॥ ३० ॥

'तुष्यन्त्वभद्रकरुणा स्वकृतेन नित्यं ।' इति गुरुदक्षिणाविचारः । स चात्र 'स्वकृतपरितुष्टः स्फुटतु' इत्यनेनोक्तः । शिष्टत्वोक्त्या तेषां सर्वेषां चानपेक्षत्वम् - ''येषां किमु स्यादितरेण तेषामकिञ्चनानमपि भक्तिभाजां'' इत्युक्तमेव विवक्षितमिति सकलमकलङ्कम् ॥

**इयं सारोद्धाराप्पतिवरकुमारी सदुदरी**
**परीक्ष्यान्यांश्च श्रीनिवासरतिपारी रसपुरी ॥**
**परीतालङ्कारैः षडरिहरिहारैस्सहचरी**
**भवेच्छ्रीवत्सुश्री रुचिररचिताचार्यलहरी ॥ ३१ ॥**

ರುಚಿರ ರಚಿತವಾದ ಈ ಆಚಾರ್ಯಲಹರಿಯು ಸಾರೋದ್ಧಾರ ಎಂಬ ಸಾಗರದ ಕುವರಿ. ಒಳಗೆ ಒಳ್ಳೆ ಅರ್ಥಗಳಿವೆ. ಇತರರನ್ನು ಪರೀಕ್ಷಿಸಿದ ನಂತರವೇ ಶ್ರೀನಿವಾಸಾಚಾರ್ಯರಲ್ಲಿ ಭಕ್ತಿಯ ಪ್ರವಾಹ ಉಕ್ಕೇರಿದೆ. ಇದು ರಸಗಳ ತವರು. ಈ ಲಹರಿಯು ಅಲಂಕಾರಗರ್ಭಿತ. ಷಟ್‌ರಿಪುಗಳ ಪರಿಹರಿಸುವ ಶ್ರೀಹರಿಯ ಹೃದಯಕ್ಕೆ ಲಕುಮಿಯಂತೆ ಹತ್ತಿರವಾಗಲಿ. ಕಾಂತಿಯಿಂದ ಬೆಳಗಲಿ.

सारोद्धार एव अप्पतिर्वरुणस्तस्य वरकन्यका । समीचीनोदरयुता सम्यग्गूढार्थगर्भितेति यावत् । उद्गता अरा यैस्ते गुणाः सन्तः यस्यामिति वा । अन्यान् परीक्ष्य श्रीनिवास एव भक्तिप्रवाहवती प्रवाहात्मिका वा । रसस्थानभूता । अरिषट्परिहारिश्रीहरेः हारैः सहचरी भवेदिति प्रार्थना । श्रीसादृश्यं श्रीनिवासाचार्यवरदश्रीनिवासोद्देश्यकत्वानुगुणमित्यशेषमति-मङ्गलम् ॥

आचार्यलहरीव्याख्या सारोद्धारार्थदर्शिनी ।।
आचार्यभक्तिपीयूषवर्षिणी स्यात्प्रहर्षिणी ।।

इति भागवतसारोद्धारप्रकरणार्थगर्भिता
श्रीजालीहाळाचार्यमाहात्म्यविलसिता
रुचिराचार्यविरचिता

# सव्याख्या आचार्यलहरी

।। श्रीकृष्णार्पणमस्तु ।।